॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
१३७



व्याकरणशास्त्रि-प्रथमखण्डोपयोगि-

# सोत्तरा-स्वरवैदिकप्रश्नोत्तरी

पण्डित श्रीविश्वेश्वरझा शास्त्रिणा
सम्पादिता ।



प्रकाशक—

चौखम्बा-संस्कृत-पुस्तकालय
बनारस सिटी ।

वि. सं. १९९८ ] १९४१ [ मूल्यं ६ आणकाः

शीघ्रता करें ! अनमोल रत्न !! प्रकाशित हो गया

# "श्रीकोष"

## ( हिन्दी से संस्कृत जेबी कोष )

प्रिय छात्र गण !

यों तो कोश ग्रन्थों में संस्कृत से हिन्दी के तो कई एक कोष ग्र
देखने में आते हैं मगर विद्यार्थियों के उपयुक्त हिन्दी से संस्
अनुवाद करने के लिए कोई भी हिन्दी-संस्कृत कोश प्रकाशित न
हुआ था। इस भारी न्यूनता को दूर करने के लिए हमने "श्रीको
( हिन्दी से संस्कृत जेबी कोष ) का प्रकाशन किया है इस "श्रीको
के द्वारा आपको एक शब्द के कई अर्थ एवं पर्याय पर्याप्तरूपेण मि
सकेंगे। इसमें लिङ्ग, क्रिया, क्रियाविशेषण, संज्ञा, भाववाचकसं
आदि का निर्देश तथा वर्गों के पहले आए हुए शब्दों के "हिन्दी प
भी बना दिए गए हैं जिनसे जनसाधारण को समुचितरूप से स
शब्दों का ज्ञान हो जाय। 'एकलरे, कुर्सी, टेबुल, आलमारी,
म्युन्सपलिटी, कचहरी, जज, कोतवाल, थानेदार' आदि वर्त
चलते-फिरते शब्दों की ओर ( जिनकी संस्कृत बनाने में
लोगों को अत्यन्त कठिनाई पड़ती थी ) विशेष ध्यान दिया गया
यह 'श्रीकोष' संस्कृत तथा अंग्रेजी पढ़ने वाले छात्रों का समान
से ध्यान रख कर ही तैयार किया गया है। इसलिए 'श्रीकोष' बे
के बड़े काम की पुस्तक हो गयी है। अब संस्कृत तथा अंग्रेजी
छात्रों को लेशमात्र भी हताश होने की आवश्यकता नहीं। आनन्द
इस जेबी "श्रीकोष" के द्वारा अनुवाद में सफलता प्राप्त कर परी
में उत्तीर्ण हो जाइए।

मूल्य

हे छात्रजन ! यदि चाहते, अनुवाद में उत्तीर्णता,
'श्रीकोष' से करिये तुरत, व्युत्पत्ति की विस्तीर्णता।
श्रीकोष वालों से यथा, दारिद्र्य डरता है सदा,
'श्रीकोष' वालों से तथा, अज्ञान भगता सर्वदा॥

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस

॥ श्रीः ॥



# ❋ हरिदास-संस्कृत-ग्रन्थमाला ❋



१३७

व्याकरणशास्त्र--प्रथमखण्डोपयोगि-

# सोत्तरा-स्वरवैदिकप्रश्नोत्तरी।

पण्डित श्रीविश्वेश्वरझा शास्त्रिणा

सम्पादिता

PUBLISHED BY

JAYA KRISHNA DĀS HARI DĀS GUPTA

*The Chowkhamba Sanskrit Series Office,*

**Benares City.**

1941.

# प्रशंसापत्रम्

अथेयं १९२५ ई० वर्षमारभ्य ४० ई० वर्षपर्यन्तं स्वरवैदिकप्रक्रिययोः प्रश्नोत्तरी श्रीविश्वेश्वरझाशर्मविरचिता तत्त्वबोधिनीशेखरादिग्रन्थं गुरुवचनञ्च समाश्रित्य निःसन्दिग्धं महता प्रयासेनेति साधु शिष्योपकाराय कल्पते इति ।

१८-१२-४० }

प्रमाणयति—
बालबोधमिश्रः
सूर्यनारायण शुक्लश्च

विदाङ्कुर्वन्तु सर्वे विद्वांसो यदियं प्रश्नोत्तरी स्वरवैदिकप्रक्रियाजिज्ञासूनां कृते महोपकारिणी यतः स्वरचिह्नानि च तत्तत्स्थले साधुतया प्रदर्श्य प्रकाशितेति ।

२०।१२।४० }

मार्तण्डशास्त्री

# स्वरवैदिक–प्रश्नोत्तराणां

# विषयानुक्रमणिका ।



॥ श्रीगणेशाय नमः ॥

# स्वरवैदिकप्रक्रियाप्रश्नोत्तरी

पार्वतीशिवयोरङ्के मोदकाशनसंरतः ।
गणेशो विघ्नशैलघ्नो मङ्गलं तनुतात् सदा ॥ १ ॥
श्रीविश्वेश्वरविश्वविश्रुतपुरीवास्तव्यविश्वेश्वरः ।
श्रीयागेश्वरशर्म्मणो बुधमणेर्विख्यातकीर्तेस्सुतः ॥
स्वं तातञ्च गुरुं सुबोधजनकं श्रीबालबोधाऽभिध-
न्नत्वा वैदिकप्रक्रियास्वरभवप्रश्नोत्तरीं निर्ममे ॥ २ ॥

१९२५

१—माह्विचीकरताम्, सर्वम्, जयेश्वः, ईड्यः, शरावती, एतेसूत्रोपन्यासपुरस्सरं, साधनीयाः ।

२—आगच्छ देव ग्रामम् प्रविश, अत्र सूत्रोपन्यासपुरस्सरं स्वरो, वर्णनीयः । ह्वेति क्षियायाम्, वै वा वेति च छन्दसि, पूजनात् पूजितमनुदात्तम् काष्ठादिभ्यः, गतिर्गतौ, एतानि, व्याख्याय उदाहरणेषु समन्वयो विधेयः ।

३—देवीम् अत्र ईकारोऽनुदात्तः उदात्तो वा, अग्निमीळे, अत्र स्वरप्रक्रियाम् वर्णय, 'सुबामन्त्रिते पराङ्गवत्स्वरे' एतस्यार्थमुदाहरणञ्च वक्तव्यम् । 'अभ्यस्तानामादिः' अस्य कोर्थः, उदाहरणञ्च किम्, तत्सर्वम् वाच्यम् ।

४—देवा अदुह, वारयध्वात्, दिवम् सुपर्णो गत्वाय, एतेषु वैदिक प्रक्रियोक्तम् कार्यम् सूत्रोपन्यासपूर्वकं वदन्तु ।

५—'आतोऽटि नित्यम्' 'छन्दसि वाप्रामेड़ितयोः' 'निसस्तपतावनासेवने' एषामुदाहरणानि तेषु समन्वयश्च वक्तव्यः ।

## प्रश्नोत्तराणि—

१—माहिचीकरताम्—'कृ' धातोर्णिचि अनुबन्धलोपे लुङि तसि तस्य ता-मादेशे च्लौ "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इत्यनेन च्लेश्चङादेशेऽनुबन्धलोपे कृ+इ+अ+तामिति स्थिते "चङि" इति द्वित्वे अभ्यासत्वे अभ्यासकार्ये वृद्धौ रपरत्वे उपधाह्रस्वे "णेरनिटि" इति णेर्लोपेऽडागमे प्राप्ते "न माङ्योगे" इति तन्निषेधे सन्वद्भावादिकार्य्ये मा हि चीकरतामित्यत्राऽदुपदेशात्परत्वेन लसार्व-धातुकाऽनुदात्तत्वे कृते चङ एव स्वरे प्राप्ते "चङ्यन्यतरस्याम्" इति सूत्रेण धात्वकार उदात्तः एतदभावे चङुदात्तः ।

सर्वम्— सर्व-शब्दादमि "अमिपूर्वः" इति सूत्रेण पूर्वरूपे "सर्वस्य सुपि" इति सूत्रेण सर्वशब्दस्याऽऽद्युदात्तत्वे सर्वमिति सिद्धम् ।

जयोऽश्वः—जयत्यनेनेति जय इति विग्रहे 'जि' धातोः "एरच्" इति सूत्रेण अच् प्रत्ययनेऽनुबन्धलोपे गुणेऽयादेशे 'जय' इत्यस्य प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'जयः' इति साधुः अत्र "जयः करणम्" इति सूत्रेण जयशब्दस्याऽऽद्युदात्तः।

ईड्यः—ईडितुं शक्य इति विग्रहे 'ईड्' धातोः "ऋहलोर्ण्यत्" इति सूत्रेण ण्यत् प्रत्ययेऽनुबन्धलोपे ईड्य इत्यस्य प्रातिपदिकत्वे सौ रुत्वे विसर्गे "ईडवन्दवृशंसदुहां ण्यतः" इति सूत्रेण 'ईड्य' इत्यस्याऽऽद्युदात्तत्वे 'ईड्यः' इति सिद्धम्

शरावती—शराःसन्त्यस्यामिति (शरावती नाम नदीति) विग्रहे शरश-ब्दात् "नद्यां मतुप्" इति सूत्रेण मतुपि अनुबन्धलोपे "मादुपधायाश्च मतो-र्वोऽयवादिभ्यः" इति सूत्रेण मकारस्य वकारे "शरादीनाञ्च" इति सूत्रेण दीर्घे ङीपि सौ सुलोपे शरावतीत्यत्र "मतोः पूर्वमात्संज्ञायां स्त्रियाम्" इति सूत्रेण मतोः पूर्वाकारस्योदात्तत्वे 'शरावती' इति सिद्धम् ।

८—आगच्छ देव ग्रामं प्रविश—अत्र "लोट् च" इति सूत्रेण अनुदा-त्तत्वस्य निषेधे प्राप्ते तम्प्रबाध्य "विभाषितं सोपसर्गमनुत्तमम्" इति वैक-ल्पिकाऽनुदात्तत्वे तत्सिद्धयति । अत्र विशेति पक्षे निहतं पक्षे शप्रत्ययस्वरेणान्तोदा-त्तम् यदाऽन्तोदात्तन्तदा "तिङि चोदात्तवति" । इति सूत्रेण गतेर्निघातः ।

"हेति क्षियायाम्"—हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता स्यात् क्षियायाम् धर्म्मव्यतिक्रमे इत्यर्थः उदाहरणञ्चात्र 'स्वयं ह रथेन याति ३ उपाध्यायं

पदातिं गमयति' । उपाध्याये पदातौ गच्छति सति शिष्यस्य रथेन गमनं प्रतिषिद्धमिति धर्मव्यतिक्रमः ।

"वै वा वेति च छन्दसि"—आभ्यां युक्तं प्रथमं तिङन्तमनुदात्तं वा स्याच्छन्दसि । वै स्फुटार्थे क्षमायाञ्च वाव प्रसिद्धौ स्फुटार्थे च । उदाहरणञ्चात्र 'अहर्वै' 'देवानामासीत्', 'अयं वा व हस्त आसीत्' ।

"पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः"—पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तं स्यात् । उदाहरणाञ्च 'काष्ठाध्यापकः' काष्ठादयोऽद्भुतपर्यायाः सन्तः पूजनवचनाः भवन्ति ।

"गतिर्गतौ"—गतौ गतिरनुदात्तः स्यादित्यर्थः । अभ्युद्धरतीत्युदाहरणम् ।

३—'देवीं वाचम्'—देव शब्दस्याच् प्रत्ययान्तत्वात् "चितः" इति सूत्रेणान्तोदात्तत्वे पचादिषु 'देवट्' इति पाठात् "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" इति सूत्रेण ङीपि तस्य "अनुदात्तौ सुप्पितौ" इति सूत्रेणाऽनुदात्तत्वे "यस्येति च" इति सूत्रेणाकारस्य लोपे "अनुदात्तस्य च यत्रोदात्तलोपः" इति सूत्रेण ङीवुदात्तः ।

ननु "अनुदात्तस्य च यत्रोदात्तलोपः" इदं व्यर्थम् नह्युदात्ते स्वरिते वा परे उदात्तलोपोऽस्ति । नच प्रसज्यते इति प्रासङ्गः अत्र कर्मणि घञ् "कर्षात्वतो घञोऽन्त उदात्तः" इत्यन्तोदात्तत्वे "उपसर्गस्य घञमनुष्ये बहुलम्" इत्युपसर्गस्य दीर्घे तं वहतीति "प्राग्घिताद्यत्" इति सूत्रेण यति तित्वात्स्वरिते तस्मिन् परे "यस्येति च" इति लोपः । एवञ्चात्र स्वरिते परे उदात्तलोपोऽस्त्येवेति वाच्यम् । स्वरिते हि विधीयमाने परिशिष्टम् "अनुदात्तं पदमेकवर्जम्" इत्यनुदात्तं तत्कुत उदात्तलोप इति चेत् सत्यम्-'मा हि धुक्षाताम्' इत्यत्र दुहेर्लुङ्यात्मनेपदमातां "शल इगुपधादनिटः क्सः" इति च्लेः क्सः । आतामित्यस्य "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः" इति लसार्वधातुकाऽनुदात्तत्वं क्सः प्रत्ययस्वरेणोदात्तः "क्सस्याचि" इति सूत्रेणाल्लोपः अत्र "कर्षात्वतो घञोऽन्त उदात्तः" इत्यत अन्तः इत्यधिकारादन्त्यस्योदात्तत्वं स्यात् सति तु तस्मिन्नादेर्भवतीत्यलं पल्लवितेन ।

अग्निमीळे-अग्नि शब्दः "फिषोऽन्त उदात्तः" इति सूत्रेणाथवा "ञ्नित्यादिर्नित्यम्" इति सूत्रेणान्तोदात्तः । अम् सुप्त्वात् "अनुदात्तौ सुप्पितौ"

इति सूत्रेणाऽनुदात्तः "अमि पूर्वः" इति सूत्रकृतैकादेशः "एकादेश उदात्तेनोदात्तः" इत्यनेनोदात्तः। ईले तु 'ईड'-स्तुतौ लटि उत्तमपुरुषैकवचनम् प्रातिशाख्येन डस्य लत्वे "तिङ्ङतिङः" इति सूत्रेणातिङन्तादग्निशब्दात् परस्य 'ईले' शब्दस्य निघातः "उदात्तादनुदात्तस्य स्वरितः" इति ईकारस्य स्वरितत्वे 'अग्निमीळे' इति। नच मकारेण व्यवधानम् 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति परिभाषणात्। ननु "तित्स्वरितं" इत्यस्यानन्तरमिदं वक्तव्यमेवञ्च स्वरितग्रहणं न कर्तव्यं भवतीत्याशङ्कयाह मूलेऽस्याप्यसिद्धत्वाच्छेषनिघातो न। यदि तत्र क्रियते "अनुदात्तं पदमेकवर्जम्" इत्येत्प्रवर्तेत इह प्रकरणे न प्रवर्तते स्वरितस्याऽसिद्धत्वात्। तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं सिद्धमिति शम्।

"सुबामन्त्रिते पराङ्गवत्स्वरे"—सुबन्तमामन्त्रिते परे परस्याङ्गवत्स्यात् स्वरे कर्तव्ये उदाहरणञ्चात्र। 'द्रवत्पाणी शुभस्पती'।

अभ्यस्तानामादिः—अनिटथजदौ लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः। उदाहरणञ्चात्र। 'ये ददति प्रिया वसु'। 'दधाना इन्द्रे'।

४—'देवा अदुह्र'–'दुह्- धातोर्लङि तस्य झि आदेशे "आत्मनेपदेष्वनतः" इति सूत्रेण झस्यादादेशेऽडागमे "बहुलं छन्दसि" इति रुडागमेऽनुबन्धलोपे "लोपस्त आत्मनेपदेषु" इति सूत्रेण तकारस्य लोपे (द्वयोरकारयोः) "अतो गुणे" इति पररूपे 'अदुह्र' इति सिद्ध्यति। लोके 'अदुहत' इति बोध्यम्।

'वारयध्वात्'—'वृञ–' धातोर्णिच्यनुबन्धलोपे वृद्धौ रपरत्वे वारि इत्यस्य धातुत्वे लोटि तस्य ध्वमादेशे शपि अनुबन्धलोपे गुणेऽयादेशे वारयध्वमिति जाते "ध्वमो ध्वात्" इति सूत्रेण ध्वमो ध्वादादेशे 'वारयध्वात्' इति सिद्धम् लोके 'वारयध्वमि'ति बोध्यम्।

'दिवम् सुपर्णो गत्वाय'—'गम्' धातोः क्त्वा प्रत्यये "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपे "क्त्वो यक्" इति क्त्वः यगागमेऽनुबन्धलोपे 'गत्वाय' इति भवति लोके गत्वेति ज्ञेयम्।

५—'आतोऽटि नित्यम्'—अटि परतो रोः पूर्वस्थातः स्थाने नित्यमनुनासिकः स्यात्। 'महाँ इन्द्रः' इत्यत्र रोः पूर्वस्थातः स्थानेऽनुनासिकः तैत्तिरीयाणां मते तु सूत्रफलं चिन्त्यम्।

"छन्दसि वाऽप्राम्रेडितयोः"—'अग्ने त्रातऋतस्कविः' 'गिरिर्न विश्वतस्पृथुः' अत्र विसर्गस्य सकारादेशः ।

निसस्तपतावनासेवने—निष्टप्तं रक्षो निष्टप्ता अरातयः । अत्र सकारस्य मूर्धन्यादेशः ।

१९२६

१—ब्रह्मवाद्यम्, जगुरिः, उभयतोदतः प्रतिगृह्णाणि, नू मर्तः, शकुना इव पप्तिम, वर्धी वृत्रम्, धिष्व वज्रम्, व्यसीदत्, एषां लौकिकरूपप्रदर्शनपुरस्सरं साधनप्रकारो दर्शनीयः ।

२—स्वपन्ति, चञ्चा, वार्यम्, जागर्षि त्वम्, मह्यं वातः पवताम्, एषु स्वरविशेषान् प्रदर्श्य सति शिष्टस्वरस्य बलीयस्त्वे मूलं सोदाहरणं निर्दिश्यताम् ।

३—तास्यनुदात्तेदिति सूत्रं सोदाहरणप्रत्युदाहरणं व्याख्याय 'तयोर्व्रावचीति' सूत्रं सप्रयोजनं व्याख्यायताम् ।

४—प्रक्षालितमुखः, अतीक्ष्णम्, दाण्डायनस्थलम्, अनुज्येष्ठम्, एषु स्वरविधायकानि सूत्राणि बाध्यस्वरनिर्देशं विलिख्यन्ताम् ।

५—यथा पचति शोभनम्, अहो कटं करिष्यति, कटं जातु करिष्यसि देव पचतीव, प्रजामेकां रक्षन्ति, हन्त कुरु, एषु कस्कः स्वरः ।

## प्रश्नोत्तराणि—

१—ब्रह्मवाद्यम्—अत्र "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इति सूत्रेण निपातनात् ब्रह्मणि वदेर्ण्यति अनुबन्धलोपे आद्यचो वृद्धौ णिलोपे सौ अमि पूर्वरूपे 'ब्रह्मवाद्यम्' इति लोके तु "वदः सुपि क्यप् च" इति क्यप् ण्यतौ तेन 'ब्रह्मोद्यम्' 'ब्रह्मवद्यम्' इति रूपद्वयम् ।

जगुरिः—'गॄ' धातोः "आदृगमहनजनः किकिनौ लिट् च" कि प्रत्यये लिड्वद्भावे द्वित्वात्परत्वाद् "बहुलं छन्दसि" इत्युत्वे प्राप्ते "द्विर्वचनेऽचि" इति निषेधादुत्वाऽभावे द्वित्वे "उरत्" इति सूत्रेणात्वे रपरे "हलादिः शेषः" इति रेफस्य लोपे "अभ्यासे चर्च" इति जश्त्वे जगॄ+इ इति स्थिते "बहुलं छन्दसि" इति उत्तरस्योत्वे रपरे 'जगुरि' इत्यस्मात् सौ रुत्वे विसर्गे 'जगुरिः'

इति सिद्धम् । ननु लिङ्वद्भावादेव सिद्धे किद्ग्रहणङ्किमर्थमिति चेन्न "ऋच्छत्यृताम्" इति गुणबाधनार्थं कित्वस्य चारितार्थ्यात् । लोके तु 'जग्निः' इति स्यात्

उभयतोदतः प्रतिगृह्णाति—उभयतो दन्ता यस्येति विग्रहे "छन्दसि च" इति सूत्रेण दन्तशब्दस्य दतृ आदेशेऽनुबन्धलोपे शसि रूपम् । लोपे तु 'उभयतोदन्तान्' उभयतो दन्तकान्' इति ।

नू मर्तः—अत्र "ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणाम्" इति सूत्रेण नु इत्यस्य दीर्घे नू मर्तः इति लोके 'नु मर्तः'

शकुना इव पप्तिम—पतनार्थक-पत्लृ-धातोः लिटि मसि आर्द्धधातुकत्वे मस्य इटि अभ्यासत्वे हलादिः शेषे "तनिपत्योश्छन्दसि" इति सूत्रेणोपधालोपे सलोपे 'पप्तिम' इति साधुः लोके 'पेतिम' इति भवति

वधीं वृत्रम्—'हन्' धातोर्लुङि "हनो वध लिङि" "लुङि च" इति सूत्रेण हनो वधादेशे मिपि च्लौ "च्लेः सिच्" इति सूत्रेण च्लेः सिजादेशे इचावितौ इटि "तस्थस्थमिपां तान्तन्तामः" इति सूत्रेण मिपोऽमादेशे तस "अमो मश्" इति सूत्रेण मशादेशे शित्वात्सर्वादेशे "अस्तिसिचोऽपृक्ते" इति सूत्रेण ईटि टकारस्येत्संज्ञायां लोपे च "इट ईटि" इति सिचो लुकि "अकः सवर्णे दीर्घः" इति दीर्घे "बहुलं छन्दसि" इति सूत्रेण अडागमाऽभावे वधीमिति साधुः मकाराकारस्तूच्चारणार्थः लोके तु 'अवधिषमि'ति बोध्यम् ।

धिष्व वज्रम्—'धा' धातोः लोटि थासि सार्वधातुकत्वे "थासः से" इति सूत्रेण से आदेशे "सुधितवसुधितनेमधितधिष्वधिषीय च" इति सूत्रेण धकारोत्तराकारस्येत्वे "सवाभ्यां वामौ" वकारादेशे "आदेश प्रत्यययोः" इति सूत्रेण षत्वे कृते 'धिष्व' इति सिद्धम् लोके तु 'धत्स्व' इति भवतीति ज्ञेयम् ।

व्यसीदत्—विपूर्वक लृकारेत्संज्ञक–षद् धातोः "धात्वादेः षः सः" इति सूत्रेण षकारस्य सकारे लङि तिपि शपि प्राप्ते तम्प्रबाध्य "तुदादिभ्यः शः" इति शेऽनुबन्धलोपे सार्वधातुकत्वे "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति सूत्रेण सीदादेशे "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति सूत्रेणाडागमे यणादेशे "इतश्च" इति सूत्रेणेकारस्य लोपे "सदिरप्रतेः" इति नित्यमूर्धन्यादेशे प्राप्ते तम्प्रबाध्य "निव्यभिभ्योऽड्व्यवाये वा छन्दसि" इति सूत्रेण वैकल्पिकमूर्धन्यादेशे 'व्यषीदत'

मूर्धन्याऽभावपक्षे 'व्यसीदत्' इति सिद्धम् लोके तु 'व्यषीदत्' इत्येकमेव रूपं भवतीति बोध्यम् ।

२—स्वपन्ति—स्वपन्तीत्यत्र "स्वपादिर्हिंसामच्यनिटि" इति सूत्रेण लसार्वधातुकपरे वैकल्पिक आद्युदात्तो भवति तक्षे प्रत्ययस्वरेण मध्योदात्तता ।

चञ्चा—अत्र "संज्ञायामुपमानम्" इति सूत्रेण आद्युदात्तः ।

घार्यम्—अत्र "ईडवन्दवृशंसदुहां ण्यतः" इति सूत्रेणाद्युदात्तः ।

मह्यं वातः पवताम्—अत्र "ङयि च" इति सूत्रेण मह्यमित्यत्र ङे परे आद्युदात्तः ।

जागर्षि त्वम्—इत्यत्र "भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति" इति सूत्रेण लसार्वधातुके परे प्रत्ययात्पूर्वस्योदात्तत्वम् । तेन स्वरविधौ सप्तम्यास्तदन्तत्वज्ञापनात् लिदन्तस्य स्वरो न शङ्कनीयः ।

सतिशिष्टस्वरबलीयस्त्वमिति—यो हि यस्मिन् सति शिष्यते स शिष्टः तस्य बाधको भवतीत्यर्थः । एतच्च सतिशिष्टस्य बाधकत्वं न्यायसिद्धम् । तथा हि उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनया शेषनिघातः क्रियते, तत्रोत्सर्गस्यापवादस्य वा चरमा या प्राप्तिस्तत्रास्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते । तद्यथा 'औपगवत्वम्' इत्यत्राण् प्रत्यये त्वप्रत्यये च "आद्युदात्तश्च" इति प्रवर्तमानं त्वस्यैव प्रथमप्रवृत्तिं बाधते द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयतीति दिक् । 'गोपायतं नः'।

३—"तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः" इति सूत्रस्वरूपम् । तास्यादीनां समाहारद्वन्द्वः उपदेशग्रहणं सम्भवव्यभिचाराभ्यां ङिदद्भ्यां सम्बद्ध्यते, न तु तास्यनुदात्तेद्भ्याम् । ङिदिति कर्मधारयः । उपदिश्यते इति उपदेशः । तस्याकारेण ङिता च विशेषणात्तदन्तविधिः तथा च सूत्रार्थः । तासेरनुदात्तेतो ङिददुपदेशादकारान्तोपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात् न्हिङौ वर्जयित्वा । उदाहरणानि । तासि कर्ता, कर्तारौ, कर्तारः, अनुदात्तेत्—, य आस्ते, ङितः अभिचष्टे अनृतेभिः अदुपदेशात्, 'पुरुभुजा चनस्यतम्, 'वर्धमानं स्वे दमे । प्रत्युदाहरणानि । तास्यादिभ्यः किम्, 'अभिवृधे गृणीतः, उपदेशग्रहणात् नेह 'हतो वृत्राण्यार्या' लग्रहणं किम् कतीह निघ्नानाः सार्वधातुके किम् शिश्ये अन्ह्विङोः किम् ह्नुते । यदधीते ॥

तयोर्य्वावचीति—ननु "इको यणचि" इत्यनेनैव सिद्धे लक्ष्ये "तयो-

च्वावचि" इति सूत्रं व्यर्थमिति चेन्न इदुतोरसिद्धत्वेनास्यावश्यकत्वात् नच 'सिद्धः प्लुतः स्वरसन्धिषु' कथं ज्ञायते प्लुतप्रगृह्या अचीति प्रकृतिभावविधानात् यस्य हि विकारः प्राप्तः तस्य प्रकृतिभावो विधेयः प्लुतस्यासिद्धत्वेन तस्य स्वरसन्ध्याख्ये विकारः प्राप्नोति। अस्तु प्लुतः सिद्धः किमायातमिदुतोः उच्यते प्लुतप्रकारं यत्कार्यं तत्स्वरसन्धिषु सिद्धमिति सामान्येन ज्ञापकमाश्रयिष्यते ततश्चेदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशः किमर्थमिदमिति वाच्यम् सवर्णदीर्घत्वस्य शाकल्यस्य च निवृत्यर्थमस्यावश्यकत्वात्। यदीदं नोच्येत अग्ना ३ इ इन्द्रम् पटा ३ उ उदकमित्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घः स्यात्। अग्ना ३ याशे त्यादौ च "इको सवर्णे शाकल्यस्य ह्रस्वश्च" इति प्रकृतिभावः स्यात्तद्बाधनार्थमिदं वक्तव्यमेव। ननु च तन्निवृत्तये यत्नान्तरमस्ति किं पुनस्तत्प्लुतपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घनिवृत्यर्थः शाकलनिवृत्यर्थश्च तच्चावश्यं वक्तव्यं य इक् प्लुतपूर्वः न च प्लुतविकारः भो ३ इन्द्र भोइयिन्द्रं गायतीति भोशब्दस्य छान्दसः प्लुतः ततः परस्येकारस्य निपातत्वात् प्रकृतिभावे प्राप्ते तम्प्रबाध्य यणादेशः तदेतस्यावश्यं कर्तव्यत्वे तेनैव यणा सिद्धे पुनरपि व्यर्थमेवेति चेन्न यवयोरसिद्धत्वादुदात्तस्वरितयोर्यणःस्वरितोऽनुदात्तस्येत्यस्य बाधनार्थमस्याऽवश्यकत्वात्।

तथा चोक्तं वृत्तिकृता—

किन्तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति॥
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ॥ १॥
इक् च यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्॥
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः॥ २॥

अस्यायमर्थः—"इको यणचि" इति यणादेशेन किं रूपं प्रसिद्धयति यतोऽयमाचार्य्य इदुतोर्य्वौ विदधाति तौ चेदुतौ स्वरसन्धिषु सिद्धौ ममेति सूत्रकारेणैकीभूतस्य वचनम्, एवं चोदिते परिहरति "शाकलदीर्घविधी तु निवर्त्यौ" इति पुनश्चोदयति इक् च यदेति वार्तिककारोऽपि इकः प्लुतपूर्वस्य यणं विदधाति स च प्रकृतिभावस्यैव शाकलदीर्घविध्योरपि अपवादः। ततश्च तेनैव यणा एतयोरपि इदुतोः शाकलदीर्घो न भविष्यति इति नार्थं एतेन परिहरति 'यण्स्वरेति' यण्स्वरबाधनार्थमेव हेतुः सूत्रारम्भस्येति दिक्।

४—प्रक्षालितमुखः— अत्र "निष्ठोपमानादन्यतरस्याम्" इति सूत्रे

वैकल्पिकान्तोदात्तत्वे प्रक्षालितमुख इति पक्षे निष्ठोपसर्गं इति पूर्वपदान्तोदात्तत्वम् । प्रक्षालितं मुखं येन यस्य वेति विग्रहः ।

अतीक्ष्णम्—इत्यत्र "विभाषा तृन्नन्नतीक्ष्णशुचिषु" इति सूत्रेण वैकल्पिकान्तोदात्तत्वे 'अतीक्ष्णम्' इति न तीक्ष्णमिति विग्रहः पक्षे नित्यान्तोदात्तः अशुचिपक्षे अव्ययस्वरः ।

दाण्डायनस्थलम्—अत्र प्रयोगे "कूलसूदस्थलकर्षाः संज्ञायाम्" इति सूत्रेणाऽद्युदात्तः ।

अनुज्येष्ठम्—अनुगतो ज्येष्ठ इत्यनुज्येष्ठस्तम् 'अनुज्येष्ठम्' इत्यत्र "मनोऽप्रधानकनीयसी" इति सूत्रेणाऽन्तोदात्तः ।

५—यथापचति शोभनम्—इत्यत्र "पूजायां नानन्तरम्" इति सूत्रेणाऽनुदात्तस्वर एव

अहो कटं करिष्यति—अत्र प्रयोगे "शेषे विभाषा" इति वैकल्पिकाऽनुदात्तो भवति—

कटं जातु करिष्यति—अत्र कटशब्दः फिट्त्वात् "फिषोऽन्त उदात्तः" इति सूत्रेणाऽद्युदात्तः जातु शब्दो निपातात् "निपाता आद्युदाताः" इति सूत्रेणाऽद्युदात्तः । करिष्यसि इत्यत्र "तिङ्ङतिङः अनुदात्तौ" इति सूत्रेणाऽनुदात्तः । "जात्वपूर्वम्" इति सूत्रेण निषेधस्तु न सूत्रे अपूर्वग्रहणात् ।

देवः पचतीव—अत्र प्रयोगेऽनुदात्तत्वे प्राप्ते "चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगते" इति सूत्रेण निषेधः । अत्र देव इति "फिषोऽन्त उदात्तः" इति अन्तोदात्तः ।

प्रजामेकां रक्षति—अत्राऽनुदात्तत्वे प्राप्ते "एकान्याभ्यां समर्थाभ्याम्" इति सूत्रेण निषेधः—

हन्त कुरु—अत्र "हन्त च" इति सूत्रेण वैकल्पिकाऽनुदात्तः "निपातैर्यद्यदि" इति सूत्रेण निघातप्रतिषेधः ।

१९२७

१—अङ्गिरस्वत्, आध्वं नो देवाः, विदामकन्, बर्हिष्येषु निधिषु संवत्सरीणः, सोमः सधस्थम्, मरुतस्तज्जुजुष्टन, प्रप्रायमग्निः, एषु लौकिकरूपप्रदर्शनपूर्वकं वैदिकसाधनप्रकारं प्रदर्शयत ।

२—द्रवत्पाणी शुभस्पती, ममत्तु नः, तित्तिरिः, अहरहर्जायते, इ
राजा, एषु ससूत्रनिर्देशं स्वरविशेषान् निरूपयत ।

३—रज्जुशारदम्, पण्यकम्बलः, तन्तुवायः, मत्स्यचूर्णम्, एषु सम
सस्वरविधायक सूत्रोल्लेखनपुरस्सरं स्वरान् निरूपयत ।

४—जातु भोक्ष्यसे, आम् पचसि देवदत्त ३ अयं वाव हस्तः आसी
अधीष्व माणवक, पुरा विद्योतते विद्युत, एषु वाक्यस्वरनिर्दे
स्वरविधायकानि लिखत ।

५—व्यत्ययो बहुलम्, उत्तरपदवृद्धौ सर्वञ्च, विभाषोत्पुच्छे,
सूत्राणां विषयान् प्रदर्शयत ।

## प्रश्नोत्तराणि—

१—अङ्गिरस्वत्—अङ्गिरसा तुल्यमङ्गिरस्वदिति विग्रहे अङ्गिरस्-शब्द
"तेन तुल्यं क्रिया चेद्वतिः" इति सूत्रेण वतिप्रत्यये तद्धितान्तत्वात् प्रातिपदि
कत्वे "सुपो धातुप्रातिपदिकयोः" इति सूत्रेण सुपो लुकि "नभोऽङ्गिरोमनुषां
वेत्युपसङ्ख्यानम्" इत्यनेन भत्वे भत्वात् रुत्वाऽभावे 'अङ्गिरस्वत्'
भवति लोके तु 'अङ्गिरोवत्' इत्येकमेव रूपं स्यात् ।

त्राध्वं नो देवाः—पालनार्थक-ङकारेत्संज्ञक 'त्रै' धातोर्लोटि ध्वमि श
"बहुलं छन्दसि" इति सूत्रेण अदादिभिन्नस्यापि शपो लुकि एतत्सामर्थ्याद्वि
"आदेच उपदेशेऽशिति" इति सूत्रेणात्वे 'त्राध्वम्' इति सिद्धम् लोके 'त्राय
ध्वम्' इति बोध्यम् ।

विदाक्रमन्—विद्-धातोर्लुङि "अभ्युत्सादयां प्रजनयां चिकयां र
यामकः पावयां क्रियाद्विदामक्रन्निति छन्दसि" इति सूत्रेण आमि लुङ्
करोत्यनुप्रयोगे तस्य झिआदेशे अन्तादेशे विदाम्+कृ+अन्ति इति जाते नि
तनात् गुणाऽभावे यणि "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यडागमे "इतश्च" इती
कारलोपे संयोगान्तलोपे "विदामक्रन्" इति सिद्धम् लोके तु 'अवेदिषुः' इति
इति भवति ।

बर्हिष्येषु निधिषु—'बृंह' धातोः "बृंहतेर्नलोपश्च" इति सूत्रेण इस् प्रत्य
ये बृंहतेर्नलोपे च गुणो रपरे बर्हिस् शब्दात् बर्हिषि दत्तमिति व्युत्पत्तौ "बर्हिषि
दत्तम्" इति सूत्रेण यत् प्रत्यये अनुबन्धलोपे षत्वे सुपि 'बर्हिष्येषु' इति भवति

संवत्सरीणः"—संवत्सरे जातः संवत्सरीणः इत्यर्थे संवत्सर शब्दात् "स-परिपूर्वात्ख च" इति सूत्रेण खप्रत्यये खस्य "आयनेयीनीयियः फढखछ-घां प्रत्ययादीनाम्" इति सूत्रेण खस्य ईनादेशे अकारस्य लोपे णत्वे प्रादिपदिकत्वे सौ रुत्वे विसर्गे 'संवत्सरीणः' इति सिद्धम्। छप्रत्ययपक्षे 'संवत्सरीयः'।

सोमः सधस्थम्—सह तिष्ठति इत्यर्थे "आतोऽनुपसर्गे कः" इति सूत्रेण स्थाधातोः कप्रत्ययेऽनुबन्धलोपे "आर्द्धधातुकं शेषः" इति सूत्रेणार्द्धधातुकत्वे "आतो लोप इटि च" इति सूत्रेण आकारस्य लोपे 'सधमादस्थयोश्छन्दसि' इति सूत्रेण सहस्य सधादेशे विभक्तिकार्ये 'सधस्थम्' इति भवति लोके तु 'सहस्थम्' इति बोध्यम्।

मरुतस्तज्जुजुष्टन—ईकारेत्संज्ञक प्रीतिसेनार्थक जुष् धातोः लोटि ध्वमि "तप्तनप्तनथनाश्च" इति सूत्रेण ध्वमित्यस्य तनादेशे व्यत्ययेन परस्मैपदत्वे श्लौ व जाते "श्लौ" इति द्वित्वे "पूर्वोऽभ्यासः" इति अभ्याससंज्ञायां "हलादिः शेषः" इति सूत्रेण षकअभ्यासषकारस्य लोपे ष्टुत्वे 'जुजुष्टन' इति सिद्धम्। लोके तु 'जुषध्वम्' इति भवति।

प्रप्रायमग्निः—अत्र प्रयोगे "प्रसमुपोदः पादपूरणे" इति सूत्रेण द्वित्वे 'प्रप्रायमग्निः' इति सिद्धम् एवं विधस्य भाषायां प्रयोगः नास्तीति छन्दस्येवेदं विधानम्।

२—द्रवत्पाणी शुभस्पती-अत्र प्रयोगे "सुबामन्त्रिते पराङ्गवत्स्वरे" इति सूत्रेण उदात्तत्वम्।

ममचु नः—अत्र प्रयोगे "भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति" इति सूत्रेणाऽऽद्युदात्तः।

तित्तिरिः-अत्र प्रयोगे "शकुनीनां च लघुपूर्वम्" इत्यनेन पूर्वं लघु उदात्तः।

अहरहर्जायते-मासि मासि-अत्र प्रयोगे "ऊडिदंपदाद्यप्पुम्रैद्युभ्यः" इति सूत्रेणाऽसर्वनामस्थानविभक्तेरुदात्तत्वे "अहरहर्जायते मासि मासि" इति भवति।

इन्धे राजा अत्र प्रयोगे "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः" इति सूत्रेणाऽनुदात्तत्वे प्राप्ते "विन्दीन्धिखिदिभ्यो नेति वक्तव्यम्" इत्यनेन तन्निषेधे 'इन्धे राजा' इति।

६—रज्जुशारदम्--अत्र "सृजेरसुम् च" इति सृजेरुः स च नित् बाहु-
रसुमागमः सलोपश्च तत्र सृजेरन्यादचः परेऽसुमि सलोपयणादेशोऽसुम्सकारस्य
श्त्वे च रज्जुरिति भवति तत्र प्रत्ययस्य नित्वात् "ञ्नित्यादिर्नित्यम्" इति सू-
णाऽऽद्युदात्तो भवति अत्र समासे "समासस्य" इति सूत्रेण अन्तोदात्ते प्राप्ते
म्प्रबाध्य "शारदेऽनार्तवे" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'रज्जुशार-
इति भवति ।

पण्यकम्बलः—अत्र प्रयोगे "अवद्यपण्यवर्या गर्ह्यपणितव्यानिरो-
धेषु" इति सूत्रेण निष्पन्नस्य पण्यशब्दस्य "यतोऽनावः" इति सूत्रेण आ-
दात्तत्वे पण्यश्चासौ कम्बल इति पण्यकम्बलः समासे "समासस्य" इति सू-
णाऽन्तोदात्ते प्राप्ते तम्प्रबाध्य "कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लील-
रूपापारेवडवातैतिलकद्रूपण्यकम्बलो दासीभाराणां च" इति सूत्रे-
पूर्वपदप्रकृतिस्वरे "पण्यकम्बलः" इति सिद्धम् ।

तन्तुवायः—अत्र प्रयोगे वे-धातो "ह्वावामश्च" इत्यणि आत्वे अनुब-
लोपे युगागमेऽनुबन्धलोपे समासे "शिल्पिनि चाकृञः" इति सूत्रेणाऽऽद्युदात्ते
न्तुवायः' इति भवति ।

मत्स्यचूर्णम्—मत्स्यस्य चूर्णमिति विग्रहे समासे "समासस्य" इति सू-
णाऽन्तोदात्ते "मत्स्यचूर्णम्" इति भवति ।

जातु भोक्ष्यसे--अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेण निघाते
प्राप्ते "जात्वपूर्वम्" इति सूत्रेण तन्निषेधे "तास्यनुदात्तेन्ङिददुपदेशा-
सार्वधातुकमनुदात्तमन्ह्विङोः" इति सूत्रेण से इत्यस्य निघाते । मध्योदा-
पदे जातु शब्दस्य निपातत्वात "निपाता आद्युदात्ताः" इति सूत्रेण आद्यु-
दात्तत्वे "जातु भोक्ष्यसे" इति भवति ।

आम पचसि देवदत्त३—अत्र प्रयोगे "आमन्त्रितस्य च" इति सू-
सर्वस्याऽनुदात्तत्वे प्राप्ते "आम एकान्तरमामन्त्रितमनन्तिके" इति नि-
"आमन्त्रितस्य च" इति सूत्रेण आमन्त्रितस्याऽऽद्युदात्तत्वे "आम् पचसि
देवदत्त ३" इति भवति ।

अयं वा व हस्त आसीत्—अत्र प्रयोगे "तिङ्ङतिङः" इति सू-
निघाते प्राप्ते तम्प्रबाध्य 'आभ्यां युक्तं प्रथमं तिङन्तमनुदात्तं वा स्याच्छन्द-

र्थक—"वैवावेति च च्छन्दसि" इति सूत्रेण वैकल्पिकाऽनुदात्तत्वे "अयं वा
व हस्त आसीत्" इति भवति ।

**अधीष्व माणवक पुरा विद्योतते विद्युत्**—अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेणाऽनुदात्तत्वे प्राप्ते तत्प्रबाध्य "पुरा च परीप्सायाम्" इति सूत्रेण वैकल्पिकाऽनुदात्तत्वे "अधीष्व माणवक पुरा विद्योतते विद्युत्" इति पक्षे द्योतत इति धातुस्वरेणाऽद्युदात्तत्वे "तास्यनुदात्तेन्ङिद्"ति लसार्वधातुकनिघाते "अधीष्व माणवक पुरा विद्योतते विद्युत्" इति भवति ।

**५—व्यत्ययोबहुलम्**—विकरणानां बहुलं व्यत्ययः स्याच्छन्दसि, इत्यर्थः। 'आण्डा शुष्मस्य भेदति' अत्र भेदतीत्यस्य रौधादिकात् श्नमि सति भिनत्ति इति प्राप्तेऽनेन शपि भेदतीति भवति 'जरसामरते पतिः' अत्र म्रियते इति प्राप्ते तौदादिकशप्रत्ययेन 'इन्द्रो वस्तेन नेषतु' अत्र नयतु इति प्राप्तेन न यतेर्लोट शप् सिपौ द्वौ विकरणौ । 'इन्द्रेण युजा तरुषेम वृत्रम्' तरेमेत्यर्थः। तरतुवतेर्विध्यादौ लिङ् उः सिप् शप् च त्रयो विकरणाः । एवञ्च ।

'सुप्तिङुपग्रहलिङ्गनराणाम् कालहलच्स्वरकर्तृयङाञ्च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिद्ध्यति बाहुलकेन" ॥

शास्त्रकृत् पाणिनिः आचार्यः एषां सुप्प्रभृतीनां व्यत्ययमिच्छति सोपि तथावेधो व्यत्ययः बाहुलकेन सिद्ध्यति—

**सुप्तिङादीनां क्रमशः उदाहरणानि ।**

"धुरि दक्षिणायाः" । अत्र दक्षिणस्यामिति प्राप्ते इति, सुपः "चपालं ये अश्वयूपाय तक्षति" अत्र तक्षन्ति इति प्राप्ते इति, तिङ उपग्रहः परस्मैपदात्मने पदे । "ब्रह्मचारिणमिच्छते" इच्छतीति प्राप्ते "प्रतीपमन्य ऊर्मियुध्यति" । युध्यते इति प्राप्ते । "मधोस्तृप्ता इवासते" । मधुनः इति प्राप्ते । नरः पुरुषः । "अधः स वीरैर्दशभिः वियूयाः" । वियूयादिति प्राप्ते । कालः कालवाची प्रत्ययः "श्वोऽग्नीनाधास्यमानेन" लुटो विषये लृट् । "तमसो गा अदुक्षत्" । अधुक्षत् इति प्राप्ते । "मित्र वयञ्च सूरयः" । मित्रावयमितिप्राप्ते । एवं क्रमेणोदाहरणानि सर्वेषां मूले स्पष्टीकृतानि । अस्य सूत्रस्यायमेव विषयः इति बोध्यम् ।

**उत्तरपदवृद्धौ सर्वञ्च**—उत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता तद्वत्युत्तर-

पदे परे सर्वशब्दो दिक्शब्दश्चान्तोदात्ताः भवन्ति । तेन "सर्वपाञ्चालकः" "अपरपाञ्चालकः" इति भवति । अत्र उत्तरपदस्याधिकाराऽभावे "सर्वभासः" "सर्वकारकः" इत्यत्र दोषापत्तिरिति ।

विभाषोत्पुच्छे । उच्छद्वात् परः पुच्छशब्दः अन्तोदात्तो वा स्यात्तत्पुरुषे इत्यर्थः । "उत्क्रान्तः पुच्छादुत्पुच्छः" । यदा तु पुच्छमुदस्यति उत्पुच्छयते एरच् उत्पुच्छस्तदा थाथादिस्वरेण नित्यमन्तोदात्ते प्राप्ते विकल्पोयम् । सेयमुभयत्र विभाषा तत्पुरुषग्रहणाभावे उदस्तं पुच्छं येन स उत्पुच्छः इत्यत्र दोषापत्तिः तत्पुरुषग्रहणमिति ।

१९२८

१—वाजिनेषु, मान आधक्, देवयज्यायै, विभाजं नाशकत्, मनुति ... त्वा सयूथ्यः, मधव्यः, आस्तुतिं करिष्ठः, ज्या इयम्, नूनं ... तात्; दविध्वतो रश्मयः सूर्यस्य, अग्नाइ पत्नीवः ।

एषां मध्ये नवसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि सूत्र-निर्देशं स्वेच्छया लेख्यानि ।

२—सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः, अभ्यस्तानामादिः, ... ह्यचश्छन्दसि, सगतिरपि तिङ्–

एषामर्था उदाहरणानि च लेख्यानि ।

३—ऋत्विक्, हन्त प्रविश, जातु भोक्ष्यसे, त्रिपादूर्ध्वः, वस्त्रान्त... शचीपतिम्, काण्डपृष्ठः, तन्तुवायः, त्वोतासः, न्यर्बुदम्, म... का, गेहम्, दातवाड ।

एषां मध्ये दशसु स्थलेषु ससूत्रनिर्देशं स्वरविशेषाः प्रदर्शनीयाः ...

## प्रश्नोत्तराणि—

१—वाजिनेषु—अस्य अयस्मयादिगणे पाठात् "अयस्मयादीनि छन्दसि" इति सामर्थ्यात् "उभय संज्ञान्यपीति वक्तव्यम्" इत्यनेन भत्वे ... च जातेऽस्य पदत्वाज्जश्त्वे भत्वात्कुत्वाऽभावे "वाजिनेषु" इति भवति ।

मान आधक्—आङ्पूर्वकदह्धातोर्लुङि तिपि च्लौ "मन्त्रे घसह्वरणश... दहाद्वृच्कृगमिजनिभ्यो लेः" इति सूत्रेण च्लेर्लुकि "इतश्च" इतीकार... लोपे हलङ्यादिना तकारस्य लोपे आटि वृद्धौ "दादेर्धातोर्घः" इति ...

स्य षत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति सूत्रेण भष्भावे 'मान आधक्' इति भवति ।

देवयज्यायै—"छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्य ब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इति सूत्रे देवयज्येति निपातनात् देवशब्दे उपपदे यज्धातोः यप्रत्यये अपि देवयज्याशब्दस्य चतुर्थ्येकवचने "देवयज्यायै" इति स्त्रीलिङ्गमात्र एव उदाहरणमिति बोध्यम् ।

विभाजं नाशकत्—विभक्तुमित्यर्थे विपूर्वक भजधातोः "शकिणमुल्कमुलौ च" इति सूत्रेण णमुल् प्रत्ययेऽनुबन्धलोपे णित्वात् "अत उपधायाः" इति सूत्रेण उपधाऽकारस्य वृद्धौ विभक्तिकार्ये "विभाजं नाशकत्" इति भवति ।

अनुसखा स यूथ्यः—अत्र प्रयोगांशे सयूथशब्दात् "सगर्भसयूथसनुताद्यन्" इति सूत्रेण यन् प्रत्ययेऽनुबन्धलोपे प्रातिपदिककार्ये "सयूथ्यः" इति भवति ।

मधव्यः—मधुशब्दात् "मधोः" इति सूत्रेण मयडर्थे यत्प्रत्ययेऽनुबन्धलोपे "ओर्गुणः" इति सूत्रेण गुणे "वान्तो यि प्रत्यये" इति अवादेशे मधव्य इति स्थिते प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'मधव्यः' इति सिद्धम् ।

आसुतिं करिष्ठः—कर्तृ शब्दात् "तुश्छन्दसि" इति सूत्रेण इष्ठन् प्रत्ययेऽनुबन्धलोपे "तुरिष्ठेमेयस्सु" इति तृलोपे करिष्ठ इत्यस्य प्रातिपदिकत्वे विभक्तिकार्ये "करिष्ठः" इति ।

ज्या इयम्—अत्र "गुणे प्राप्ते "ईषाअक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः" इत्यनेन प्रकृतिभावे "ज्या इयम" इति भवति ।

नूनं कृणुतात्—हिंसाकरणार्थकेकारेत्संज्ञक कृव्–धातोः लोटि थे प्रत्यये साधातुकत्वे "इदितो नुम् धातोः" इति नुमि उमावितो "धिन्विकृण्व्योरच" इति सूत्रेण उप्रत्यये वकारस्याकारेऽकारस्य लोपे "तस्थस्थमिपां तान्तन्तामः" इति सूत्रेण तादेशे णत्वे 'कृणुत' इति जाते "तस्य तात्" इति सूत्रेण तस्य तातादेशे 'नूनं कृणुतात्' इति भवति—लोके 'कृणुत' इति भवति ।

दविध्वतो रश्मयः सूर्यस्य—अत्र (दविध्वतः) "दाधर्ति दर्धर्ति दर्धर्षि" इत्यादिसूत्रेण यङ्लुगन्तशत्रन्तध्वरतेरभ्यासस्य निपातनात् विगागमे धातो-

ऋकारलोपे च 'द्विध्वत्' शब्दस्य "द्विध्वतः" इति भवति शत्रन्ताऽवस्था नुम् तु न "नाभ्यस्ताच्छतुः" इति निषेधात् ।

अग्ना ३ इ पत्नीवः—अत्र प्रयोगे "आमन्त्रिते छन्दसि प्लुतवि योर्यं वक्तव्यः" इत्यनेन प्लुतविकारे '·अग्ना ३ इ पत्नीवः" इति भवति।

२—सतिशिष्टस्वरबलीयस्त्वमिति—योहि यस्मिन् सति शिष्यते स तस्य बाधको भवति इत्यर्थः । एतच्च सतिशिष्टस्य बाधकत्वं न्यायसिद्धम् । त उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनया शेषनिघातः क्रियते तत्रोत्सर्ग ऽपवादस्य वा चरमा या प्राप्तिस्तत्रास्याः उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते । तद् 'औपगवत्वम्' इत्यत्राण् प्रत्यये त्वप्रत्यये च आद्युदात्तश्च इति प्रवर्तमानं स्व प्रथमप्रवृत्तिं बाधते द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयतीति दिक् । गोपायतं न

अभ्यस्तानामादिः—अनिट्यजादौ लसार्वधातुके परेऽभ्यस्तानामादिरु स्यात् । इत्यर्थः । 'ये ददति प्रिया वसु' । इत्युदाहरणम् । परत्वाच्चित्स्व प्ययं बाधते तेन 'दधाना' इत्युदाहरणम् ।

द्व्यचश्छन्दसि—इति सूत्रस्वरूपम् । विकारे मयट् स्यात् इत्यर्थः " मयं बर्हिः" । "यस्य पर्णमयी जुहूः" इत्युदाहरणम् ।

सगतिरपितिङ—"सगतिरपि तिङ्" इति सूत्रस्वरूपम् पूजनेभ्यः दभ्यस्तिङन्तं पूजितमनुदात्तम् । इत्यर्थः । "यत्काष्ठां प्रपचति" इत्युदाह

३—ऋत्विक्—अत्र "ऋत्विग्" इत्यादिसूत्रेण किनि सर्वापहारे "व स्वपियजादीनाङ्किति" इति सूत्रेण सम्प्रसारणे "सम्प्रसारणाच्च" इ वैरूपे ऋत्विक्छन्दः कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्ते "ऋत्विक्" इति भव

हन्त प्रविश—अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेण निघाते तस्य "निपातैर्यद्यदि" इति नित्यनिषेधे प्राप्ते तम्प्रबाध्य "हन्त च" नेन वैकल्पिकाऽनुदात्तत्वे कृते "हन्त प्रविश" इति पक्षेऽन्तोदात्ते "हन्त प्र श" इति भवति ।

जातु भोदयसे १६ पृष्ठे द्रष्टव्यम् ।

त्रिपादूर्ध्वः—त्रयः पादाः यस्येति त्रिपात्—अत्र समासे "संख्या वस्य" पादशब्दस्याऽकारस्यलोपे "द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" सूत्रेणाऽन्तोदात्ते "त्रिपादूर्ध्वः" इति भवति ।

वस्त्रान्तरः—व्यवधानवाचकात् परमन्तोदात्तमित्यर्थक "व्यवायिनोऽन्तरम्" इति सूत्रेणाऽन्तोदात्तेऽस्मादेवज्ञापकात् अन्तरशब्दस्य परनिपाते "वस्त्रान्तरः" इति भवति ।

शचीपतिम्—अत्र षष्ठीसमासे "समासस्य" इत्यन्तोदात्ते प्राप्ते तम्प्रबाध्य "उभे वनस्पत्यादिषु युगपत्" इति सूत्रेण पूर्वोत्तरपदयोः युगपत् प्रकृतिभावे तेन पतिरित्यत्र प्रत्ययस्वरेणाऽद्युदात्ते शचीत्यत्र शार्ङ्गरवादित्वात् ङीनि नित्वादाद्युदात्तत्वे तत्सिद्धम् ।

काण्डपृष्ठः—कण्ठादीन्युत्तरपदानि संज्ञौपम्ययोराद्युदात्तानि स्युर्बहुव्रीहौ । इत्यर्थक"कण्ठपृष्ठग्रीवाजङ्घं च"इति सूत्रेणाद्युदात्ते "काण्डपृष्ठः" ।

तन्तुवायः—१२ पृष्ठे द्रष्टव्यम् ।

त्वोतासः—अत्र त्वया ऊताः=रक्षिताः त्वोतासः । मपर्यन्तस्य "प्रत्ययोत्तरपदयोश्च" इति त्वादेशे छान्दसत्वादकारलोपे ऊता इति अवतेः क्ते "ज्वरत्वर" इत्यादिनोठि वृद्धौ छान्दसत्वादिडागमाऽभावेऽसुगि "तृतीया कर्मणि" इति सूत्रेण पूर्वपदप्रकृतिस्वरे "एकादेश उदात्तेनोदात्तः" इति जाते स्वरितप्रचये "त्वोतासः" इति भवति ।

न्यर्बुदम्—"न्यर्बुदव्यल्कशयोरादिः" इत्यनेन आदिस्वरिते 'न्यर्बुदम्' इति भवति ।

मल्लिका—मल्लिकेत्यत्र "स्त्रीविषयवर्णाऽक्षुपूर्वाणाम्" इति सूत्रेणाद्युदात्ते 'मल्लिका' इति भवति ।

गेहम्—अत्र "नब्विषयस्याऽनिसन्तस्य" इति सूत्रेणाद्युदात्ते प्राप्ते "गेहार्थानामस्त्रियाम्" इत्यनेनाऽन्तोदात्ते 'गेहम्' इति भवति ।

दातवाउ—ददातेः "कृत्यार्थे तवैकेन्केन्यत्वनः" इत्यनेन तवै प्रत्यये दा+तवै+उ इति जाते ऐकारस्याऽऽयादेशे "लोपः शाकल्यस्य" इति यकारस्य लोपे दातवा+उ इति जाते "अन्तश्च तवै युगपत्" इति सूत्रेण तवैप्रत्ययान्तस्याद्यन्तयोर्युगपदाद्युदात्तयोः कृतयोः 'दातवा उ' इति भवति ।

१९२९

१—सर्पिश्च मे, पूर्णा विवष्टि, वीरुधः पारयिष्णवः, गृभ्णामि ते, मध्वा जभार, वायवे पिबध्यै, यस्येदमप्यं हविः, कथा ग्रामं न

पृच्छसि, ते नो अवन्तु, त्मना देवेषु, दिवं सुपर्णो गत्वाय, वृ
अघायवः, निषत्तमस्य चरतः, इरिवो मेदिनं त्वा ।

एषां मध्ये नवसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि सू
निर्देशपुरःसरं लेख्यानि ।

२—प्रकृत्यान्तः पादमव्यपरे, प्लुतावैच इदुतौ, स्वरितो वाऽनुदा
पदादौ, उदात्तयणो हल्पूर्वात् ।

एषां सूत्राणामर्थाः उदाहरणानि च लेख्यानि ।

३—स्वपन्ति, सर्वे, इन्धानः, जाया, कोलाहलः, जानती, शस्त्री अ
मा, गोहितम्, आर्यकुमारः, युक्तारोही, आवसथः, निरुपला
सत्यं भोक्ष्यसे, अग्निम् ।

एषां मध्ये दशसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रदर्शनीयाः

## प्रश्नोत्तराणि—

१—साग्धिश्च मे—अदनं ग्धिः । अदेः क्तिनि "बहुलं छन्दसि"
सूत्रेण घस्लादेशे "घसि भसोर्हलि च" इत्युपधालोपे "झलो झलि"
सूत्रेण सलोपे "झषस्तथोर्धोधः" इति सूत्रेण धत्वे घस्य जश्त्वे न च ज
कर्तव्येऽल्लोपस्य स्थानिवत्त्वम्, "न पदान्तद्विर्वचनवरेयलोपस्वरस
र्णानुस्वारदीर्घजश्चर्विधिषु" इति सूत्रेण जश्त्वे कर्तव्ये तन्निषेधात् त
समानशब्देन समासे "समानस्य च्छन्दस्य मूर्द्धप्रभृत्युदर्केषु" इति सूत्रे
समानस्य सादेशे विभक्तिकार्ये 'सग्धिः' इति भवति ।

पूर्णा विवष्टि—जुहोत्यादिभिन्नेऽपि श्लुर्भवतीत्यर्थक "बहुलं छन्दसि
इति सूत्रेण अदादित्वादपि 'वशधातोः' परस्य शपः श्लौ "श्लौ" इति सूत्रेण द्वित्वे
ऽभ्यासत्वे हलादिः शेषे "भृञामित्" इति सूत्रेणाभ्यासाकारस्येत्वे "व्रश्च
स्जसृजमृजयजराजभ्राजच्छशां षः" इति सूत्रेण शकारस्य षत्वे "ष्टुना
ष्टुः" इति ष्टुत्वे 'विवष्टि' इति भवति ।

वीरुधः पारयिष्णवः—पारीतिण्यन्तात् "णेश्छन्दसि" इति सूत्रे
इष्णुच्प्रत्ययेऽनुबन्धलोपे गुणे अयादेशे जसि "पारयिष्णवः" इति भवति ।

गृभ्णामि ते—ग्रहधातोर्लटि मिपि सार्वधातुकत्वे श्नाप्रत्ययेऽनुबन्धलो

सम्प्रसारणे गृह्णामीत्यत्र "हृग्रहोर्भश्छन्दसि" इत्यनेन हकारस्य भकारे "गृभ्णामि ते" इति सिद्धम् ।

वायवे पिबध्यै—पाधातोः तुमर्थे "तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः" इति सूत्रेण शध्यैन् प्रत्ययेऽनुबन्धलोपे "तिङ्शित्सार्वधातुकम्"इति सार्वधातुकत्वे "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति सूत्रेण 'पा' इत्यस्य पिबादेशे पररूपे 'पिबध्यै'इति भवति ।

मघवा जभार—हरणार्थक ञकारेत्सञ्ज्ञक हृधातोर्लिटि णलि द्वित्वेऽभ्यासकार्ये 'जहार' इति जाते "हृग्रहोर्भश्छन्दसि" इति हस्य भकारे 'जभार' इति एवञ्च 'मघवा जभार' इति जातम् ।

यस्येदमप्यं हविः—अद्भिः संस्कृतमिति विग्रहे तृतीयान्तादप्शब्दात् "अद्भिः संस्कृतम्" इति सूत्रेण यत्प्रत्ययेऽनुबन्धलोपे सुपो लुकि विभक्तिकार्ये 'अप्यम्' इति भवति ।

कथा ग्रामं न पृच्छसि—केन हेतुना न पृच्छसीत्यर्थः । कथा इत्यत्र "था हेतौ च छन्दसि" इति सूत्रेण किमस्थाप्रत्यये तस्य "प्राग्दिशो विभक्तिः" इत्यधिकाराद्विभक्तिसञ्ज्ञायां "किमः कः" इति सूत्रेण किमः कादेशे अव्ययत्वे सुपो लुकि 'कथा ग्रामं न पृच्छसि' इति सिद्धम् ।

तेनो अवन्तु—अवतेर्लोटि प्रथमपुरुषबहुवचने अवन्तु इति भवति ततः ते नो अवन्तु इति दशायां "एङः पदान्तादति" इति सूत्रेण पूर्वरूपे प्राप्ते तम्प्रबाध्य "अव्यादवद्यादवक्रमुरव्रतायमन्त्ववस्युषु च" इति सूत्रेण प्रकृतिभावे 'ते नो अवन्तु' इति सिद्धम् ।

त्मना देवेषु—आत्मना देवेषु इत्यवस्थायां "मन्त्रेष्वाङ्यादेरात्मनः" इति सूत्रेण आत्मन्शब्दस्यादेराकारस्य लोपे "त्मना देवेषु" इति सिद्धम् ।

दिवं सुपर्णो गत्वाय—गम्-धातोः क्त्वा प्रत्ययेऽनुबन्धलोपे "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इति सूत्रेणानुनासिकलोपे "क्त्वो यक्" इति सूत्रेण क्त्वः यगागमेऽनुबन्धलोपे 'गत्वाय' इति एवञ्च 'दिवं सुपर्णो गत्वाय' इति सिद्धम् ।

वृका अघायवः—अघशब्दात् "छन्दसि परेच्छायां क्यच्" इति

सूत्रेण क्यचि प्रत्ययेऽनुबन्धलोपे "क्याच्छन्दसि" इति सूत्रेण क्यजन्तात् उ प्रत्यये सति दीर्घप्राप्ते "न छन्दसि" इति निषेधे "अश्वाघस्याऽऽत्" इति सूत्रे घोत्तरवर्तिनोऽकारस्याऽऽति निष्पन्नादघायुशब्दाज्जसि 'अघायवः' इति भवति

ननु ईत्वमात्रे "न छन्दसि" इति सूत्रस्य प्रवर्तनात् दीर्घेणैव सिद्धे "अश्वाघस्याऽऽत्" इति सूत्रं किमर्थमिति चेन्न एतत्सूत्रारम्भसामर्थ्यात् न ईत्वमात्रं किन्तु दीर्घस्यापि निषेधेन तस्यावश्यकत्वात् ।

**निषत्तमस्य चरतः**—निपूर्वक लृकारेत्संज्ञक षद्धातोः "धात्वादेः षः सः" इति सूत्रेण सकारे निष्ठासंज्ञकक्तप्रत्ययेऽनुबन्धलोपे "सदिरप्रतेः" इति सूत्रेण सकारस्य षत्वे "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति सूत्रेण निष्ठा तकारस्य नत्वे प्राप्ते "नसत्तनिषत्ताऽनुत्तप्रतूर्तसूर्तगूर्तानि च्छन्दसि" इति सूत्रेण निपातनात् नत्वाऽभावे चत्वे विभक्तिकार्ये "निषत्तम्" इति भवति एवञ्च "निषत्तमस्य चरतः" इति सिद्धम् ।

**हरिवो मेदिनं त्वा**—हरयो विद्यन्ते यस्येति विग्रहे "तदस्यास्त्यस्मिन्निति मतुप्" इति मतुपि अनुबन्धलोपे "छन्दसीरः" इति मकारस्य वत्वे हरिवच्छब्दात् सम्बुद्ध्येकवचने सौ "उगिदचां सर्वनामस्थानेऽधातोः" इति सूत्रेण नुमि उमावितो "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" इति सूत्रेण सुलोपे संयोगान्तलोपे च कृते । "अलोन्त्यस्ये" ति परिभाषाबलात् "मतुवसोरु सम्बुद्धौ च्छन्दसि" इति सूत्रेण नकारस्य रुत्वे "संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः" इति वचनात् "हशि च" इति सूत्रेणोत्वे गुणे 'हरिवो' इति एवञ्च 'हरिवो मेदिनं त्वा' इति भवति ।

२—**प्रकृत्यान्तः पादमव्यपरे**—ऋक्पादमध्य एङ् प्रकृत्या स्यात् अति परे न तु वकारयकारपरेऽति । इति सूत्रार्थः । उपप्रयन्तो अध्वरम्, सुजाते अश्वसूनृते । इत्युदाहरणे ।

**प्लुतावैच इदुतौ**—दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते । इत्यर्थः । उदाहरणञ्चात्र—ऐ ३तिकायन, औ३पगव

**स्वरितोऽवाऽनुदत्ते पदादौ**—अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् । इत्यर्थः । उदाहरणाञ्चात्र-"वी३दं ज्योतिर्हृदये" । 'अस्य श्लोको दिवीयते ।'

उदात्तयणो हल्पूर्वात्—उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात् । इत्यर्थः । चोदयित्री सूनृतानाम् । एषा नेत्री । ऋतं देवाय कृण्वते सवित्रे । इत्युदाहरणानि ।

३—स्वपन्ति—अत्र "स्वपादिहिंसामच्यनिटि" इति सूत्रेण लसार्वधातुके परे वैकल्पिकाऽद्युदात्तो भवति । पक्षे प्रत्ययस्वरेण मध्योदात्तता भवति ।

सर्वे—इत्यत्र "सर्वस्य सुपि" इति सूत्रेण सुपि परे सर्वशब्दस्याद्युदात्ते 'सर्वे' इति ।

इन्धानः—इत्यत्र "विभाषा वेण्विन्धानयोः" इति सूत्रेण वैकल्पिकआद्युदात्तो भवति । अत्र इन्धनशब्दो यदि चानशन्तस्तदा । चित्वादन्तोदात्तः । यदा च शानजन्तस्तदा 'लसार्वधातुकाऽनुदात्तत्वे' कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः । "श्नसोरल्लोपः" इत्युदात्तस्य श्नमोऽकारस्य लोपात् सर्वथाप्यप्राप्तमाद्युदात्तत्वं पक्षे विधीयते इति ।

जाया—अत्र 'स्त्रीविषयवर्णनाम्नामि'ति आद्युदात्तत्वे प्राप्ते तम्प्रबाध्य "यपूर्वस्य स्त्रीविषयस्य" इति सूत्रेण यकारपूर्वस्यान्त्याचः उदात्तत्वे 'जाया' इति ।

कोलाहलः—अत्र प्रयोगे "लघावन्ते द्वयोश्च बह्वषो गुरुः" इति सूत्रेण बह्वच्कस्य गुरुरुदात्तो जातः ।

जानती—शत्रन्तजानतीत्यत्र "आद्युदात्तश्च" इत्यनेन शत्रन्तोदात्ते "शतुरनुमो नद्यजादी" इति सूत्रेणोदात्तत्वे 'जानती' ति भवति ।

शस्त्री श्यामा—अत्र "उपमानानि सामान्यवचनैः" इति समासे "समासस्य" इति सूत्रेण अन्तोदात्ते प्राप्ते तम्प्रबाध्य "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति सूत्रेण पूर्वपदप्रकृतिभावे 'शस्त्री श्यामा' इति भवति । अत्र शस्त्रीशब्दः गौरादिङीषन्तोदात्तः ।

गोहितम्—अत्र समासे कृते "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "क्ते च" इति सूत्रेण पूर्वपदप्रकृतिस्वरे जाते 'गोहितमि'ति ।

आर्यकुमारः—आर्यश्चासौ कुमार इति विग्रहे कर्मधारयसमासे सुपो लुकि "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "आर्यो ब्राह्मणकुमारयोः" इति सूत्रेण पूर्वपदस्य आर्यशब्दस्य वैकल्पिकप्रकृतिभावे ततश्च आर्यशब्दस्य ण्यदन्तत्वादन्तस्वरिते 'आर्यकुमारः' इति भवति ।

युक्तारोही—अत्र समासे कृते "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्बाधित्वा "युक्तारोह्यादयश्च" इति सूत्रेणाद्युदात्ते 'युक्तारोही' इति जातम्।
आवसथः—आङुपसर्गपूर्वकवस्धातो "उपसर्गे वसेः" इति अथप्रत्यये "थाऽथघञ्क्ताजबित्रकाणाम्" इति सूत्रेण अन्तोदात्ते 'आवसथः' इति भवति।
निरुपलम्—निर्गतः उपलः यस्मात् अथवा निर्गतः उपलः इति प्रादिसमासे सुपो लुकि निरुपलशब्दस्य "निरुदकादीनि च" इति सूत्रेणान्तोदात्ते 'निरुपलम्' इति भवति।

सत्यं भोक्ष्यसे—अत्र "तिङ्ङतिङः" इति सूत्रेण निघाते प्राप्ते "सत्यं प्रश्ने" इति सूत्रेण तन्निषेधे "सत्यं भोक्ष्यसे" इति, अत्र (भोक्ष्यसे) मध्योदात्तः।
अग्निम्—अत्र च माधवमतेऽव्युत्पत्तिपक्षे "फिषोऽन्त उदात्तः" इति सूत्रेणाऽन्तोदात्तता भवति। वस्तुतस्तु "घृतादीनाञ्च" इति सूत्रेण घृतादित्वादन्तोदात्तता भवति। व्युत्पत्तिपक्षे तु "ञ्नित्यादिर्नित्यम्" इति निप्रत्ययस्य नित्त्वाऽद्युदात्तः अम् सुप्त्वात् "सुप्पितौ अनुदात्तौ" इत्यनेनाऽनुदात्तः "अमि पूर्वरूपः" इत्येकादेशः "एकादेश उदात्तेनोदात्त." इति 'अग्निम्' इति भवति।

१६३०

१—प्रणङ्क्ष्यस्य। प्रण आयूंषि तारिषत। पूर्व्यासः। उभयाविनम्। भरता जातवेदसम्। नभो भरन्त एमसि। जुजोषत्। कनिक्रज्जनुषम्।
एषु लौकिकरूपप्रदर्शनपुरस्सरं वैदिककार्याणि प्रदर्शयत।
२—उपाग्न्यधीयान। खलप्व्याशा। अग्निर्मूर्धा दिवः ककुत्। उप त्वाग्ने दिवे दिवे। अत्तद्युवा। सेतपृश्निःसुभ्वे।
एषु स्वरप्रक्रिया निर्दिश्यताम्।
३—सौवर्यः सत्तस्यस्तदन्तसप्तम्यः। स्वरविधौ व्यञ्जनमविद्यमानवत्। स्वरविधौ प्रत्ययलक्षणं न। सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः।
इत्येतेषु वचनेषु द्वयोः प्रमाणं प्रयोजनञ्च निर्दिशत।
४—भूपतिः, दूरादागतः। फलकपुरम्। सुवीरेण। अक्षार्णवेष्टक्रिकम्।
एषु कस्कः स्वरो भवति केन केन शास्त्रेण।

५—बहुव्रीहिकः । प्रतिजनः । नह भोक्ष्यसे । जातु भोक्ष्यसे । काष्ठाऽध्यापकः ।

८षु स्वरविधायकानि विशेषशास्त्राणि निर्दिश्यताम् ।

## प्रश्नोत्तराणि—

१—प्रणङ्मर्त्यस्य—प्रपूर्वाण्णशेर्लुङि तिपि च्लौ "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति च्लेर्लुकि "इतश्च" इति सूत्रेणेकारस्य लोपे अडागमाऽभावे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सूत्रेण तकारस्य लोपे "उपसर्गादसमासेऽपि णोपदेशस्य" इति सूत्रेण णत्वे मर्त्यस्येति मकारेऽनुनासिके परे "यरोऽनुनासिकेऽनुनासिको वा" इति ङकारे 'प्रणङ् मर्त्यस्य' इति सिद्धम् । लोके 'प्राणशत्' इति भवति ।

प्रण आयूंषि तारिषत्—तृधातोः "लिङर्थे लेट्" इति लेटि लकारे "सिब्बहुलं लेटि" इति सूत्रेण सिपि तिपि प्रत्यये चाऽनुबन्धलोपे "लेटोऽडाटौ" इति सूत्रेण अडागमे "इतश्च लोपः परस्मैपदेषु" इति सूत्रेण इतीतो लोपे "सिब्बहुलं णिद्वक्तव्यः" इति वार्तिकेन सिपः णिद्वद्भावे इडागमे धातोर्ऋकारस्य वृद्धौ षत्वे चोक्तरूपं सिद्धम् । लोके लेट्लकारस्तु भवत्येव नहि । लोटि तु 'तरतु' इति भवति ।

पूर्व्यासः—पूर्वैः कृतमिति विग्रहे "पूर्वैः कृतमिनियौ च" इत्यनेन यत् प्रत्ययेऽनुबन्धलोपेऽकारस्य लोपे पूर्व्यशब्दाज्जसि "आज्जसेरसुक्" इत्यसुकि अनुबन्धलोपे कित्वादन्त्यावयवे सस्य रुत्वे विसर्गे 'पूर्व्यासः' इति । लोके 'पौर्विकाः' इति भवति ।

उभयाविनम्—उभयशब्दात् "बहुलं छन्दसि" इति सूत्रेण विनिप्रत्ययेऽनुबन्धलोपे "छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्" इति वार्तिकेन दीर्घे विभक्तिकार्ये "उभयाविनम्" इति भवति । लोके 'उभयी' 'औभयिकः' इति भवति ।

भरता जातवेदसम्—भकारेत्संज्ञकभृधातोर्लोटि थप्रत्यये सार्वधातुकत्वे शपि अनुबन्धलोपे गुणे रपरे "लोटो लङ्वत्" इति लङ्वद्भावे "तस्थस्थमिपां तान्तन्तामः" इति सूत्रेण तादेशे "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" इति दीर्घे "भरता" इति सिद्धम् । लोके तु 'भरत' इति भवति ।

नभो भरन्त एमसि—आङुपसर्गपूर्वकइण्-धातोर्मसि सार्वधातुके शपि शपो लुकि "इदन्तो मसि" इति सूत्रेण मस इकारान्ताऽवयवे गुणे 'एमसि' इति सिद्धम्। लोके तु 'एमः' इति भवति।

जुजोषत्—प्रीतिसेवनार्थक-ईकारेत्संज्ञकजुष्धातोर्लेटि व्यत्ययेन परस्मै तिपि "इतश्च लोपः परस्मैपदेषु" इति इकारस्य लोपे "लेटोऽडाटौ" इत्यटि व्यत्ययेन शपः श्लौ "श्लौ" इति सूत्रेण द्वित्वे अभ्यासकार्ये लघूपधगुणे "नाभ्यस्तस्याऽचि पिति सार्वधातुके" इति निषेधे प्राप्ते "नाभ्यस्तस्य चीति निषेधे बहुलं छन्दसीति वक्तव्यम्" इति लघूपधगुणे "जुजोषत्" इति भवति। लोके लेट्लकारो न भवति, लोटि 'जुषताम्' इति भवति।

कनिक्रदज्जनुषम्—अत्र "दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्ते लर्ष्याऽऽपनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्याऽऽगनीगन्तीति च" इति सूत्रेण 'कनिक्रदत्' इति निपातनात् क्रन्देर्लुङि तिपि च्लौ च्लेरङि द्वित्वे अभ्यासकार्ये "कुहोश्चुः" इति सूत्रप्राप्तस्याभ्यासस्य चुत्वाऽभावे निगागमे चाङ्गस्य नकारलोपे च 'कनिक्रदत्' इति ततः श्चुत्वे "कनिक्रदज्जनुषम्" इति। लोके 'अक्रन्दीत्' इति भवति।

द—उपाग्न्यधीयान—अत्र "अव्ययीभावस्य त्विष्यते" इति पराङ्गवद्भावेन 'आमन्त्रितस्य च' इति सूत्रेणाद्युदात्तत्वे 'उपाग्न्यधीयान' इति भवति।

खलप्व्याशा—खलपू-शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः तस्य "ओः सुपि" इत्यनेन यण् स उदात्तयण् ततः परस्य ङिप्रत्ययस्य सुप्त्वात् "सुप्तिपौ अनुदात्तौ" इति सूत्रेणाऽनुदात्तत्वे तस्याऽनुदात्तस्य "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" इति सूत्रेण स्वरिते "खलप्व्याशा" इति अत्र "उदात्तयणो हल्पूर्वात्" इति उदात्तत्वन्तु न भवति "नोङ्धात्वोः" इति तन्निषेधात्। तस्य च स्वरितेकारस्य यणि ततः परस्याशाशब्दाकारस्य "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" इत्यनेनैव स्वरितः। आशाशब्दो हि "आशायाः आदिगाख्या चेत्" इत्यन्तोदात्तत्वादनुदात्तादिः। अत्र आशाशब्दस्य निघातस्तु न भवति, आशाशब्दप्रथमाकारस्थानिकस्य स्वरितस्य त्रैपादिकेनाऽसिद्धत्वात्।

ननु यणादेशम्प्रति स्वरितस्याऽसिद्धत्वात् स्थानिन्येव यण्प्रवृत्तेः "औजढत्"

इत्यत्र हतशब्दे द्वित्वं प्रवर्तते न तु ढशब्दे । नच स्वरितयणः परस्येत्याश्रयणात् सिद्धत्वं शङ्क्यम् तथा सति "उदात्तादनुदात्तस्य स्वरितः" इत्यनेन यत्र स्वरितः क्रियते तत्रापि ह्यसिद्धत्वं न स्यात् । नचेष्टापत्तिः लक्ष्यविरोधात् । "प्रत्यग्निरुषसामग्रमख्यत्" इत्यादौ स्वरितादर्शनात् । न च "नोदात्तस्वरितोदयम्" इति निषेधः शङ्क्यः "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन 'उदात्तादनुदात्तस्य' इति यत्र प्राप्तिस्तन्मात्रस्य निषेधात् । अन्यथा "खलव्याशान्या अग्निर्ग्राह्या अस्मान्" इत्यादावपि निषेधापत्तिरिति चेदत्राहुर्भाष्यकाराः–योगविभागः करिष्यते । उदात्तयणः परस्याऽनुदात्तस्य स्वरितो भवति । ततः—स्वरितयणः, 'उदात्तयणः' इत्यनुवर्तते उदात्तयणः इत्येवं योऽभिनिर्वृतः । स्वरितस्तद्यणः परस्याऽनुदात्तस्य स्वरितः स्यादित्यर्थः । एवञ्चास्यैवाश्रयात्सिद्धत्वं नान्यस्येति शम् ।

[सूचना–'ननु यणादेशम्प्रति' इत्यादि सविस्तरप्रश्नोत्तरम्बोध्यम् । प्रयोगमात्रप्रश्ने तु नन्वितः पूर्वलिखितमेव पर्याप्तमिति ज्ञेयम् ।]

अग्निर्मूर्धा दिवः ककुत्—"अङ्गेर्निर्नलोपश्च" इत्यनेन निष्पन्नोऽग्निशब्दः प्रत्ययस्वरेण फिट्स्वरेण वाऽन्तोदात्तः । 'मुर्वी' बन्धने "कनिन् युवृषितक्षिराजिधन्वी"त्यतः क्वनिनि वर्तमाने "श्वन्नुक्षन्पूषन्" इत्यत्र मूर्धन् शब्दः कनिन् प्रत्ययान्तोऽन्तोदात्तो निपातितः । दिव्–शब्दात् परस्य षष्ठयेकवचनस्य "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" इत्युदात्तत्वम् । ककुच्छब्दः प्रातिपदिकस्वरेणाऽन्तोदात्तः एवं कृतेषु सत्सु "यज्ञकर्मण्यजपन्यूङ्खसामसु" इति सूत्रेण एकश्रुतौ 'अग्निर्मूर्धादिवः ककुत्' इति भवति । एकश्रुतिर्नाम–'उदात्तादीनाम् स्वराणामविभागेनाऽवस्थानमेकश्रुतिः ।

उपत्वाग्ने दिवे दिवे—'उपत्वाग्ने दिवे दिवे' अत्र प्रयोगे "ऊडिदं पदाद्यप्पुम्रैद्युभ्यः" इति सूत्रेणोदात्तत्वे 'उपत्वाग्ने दिवे दिवे' इति भवति ।

अक्षद्युवा—अक्षैर्दीव्यतीति विग्रहे क्विपि सर्वापहारेऽन्तरङ्गत्वादूठि यणि उपपदसमासे कृत्स्वरेणान्तोदात्ते 'अक्षद्युवा' इति भवति ।

सेत्पृश्निः सुभ्वे—अत्र क्विबन्तस्य सुभू इत्यस्य कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तेऽन्तोदात्तभूतस्य सुभूशब्दस्य चतुर्थ्येकवचने "ओः सुपि" इति यणादेशे

"उदात्तयणो हल्पूर्वात्" इति सूत्रेणोदात्तत्वे प्राप्ते 'नोङ्ध्वात्वोः' इति निषे 'सुभ्वे' इति भवति।

३—सौवर्यः—ननु "भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् वं पिति" इति सूत्रे पूर्वग्रहणाऽभावेनैव सिद्धे पूर्वग्रहणं व्यर्थमिति चेन्न "सौवर्य सप्तम्यस्तदन्तसप्तम्यः" इति ज्ञापनार्थं तस्याऽवश्यकत्वात्। तेन "सर्वस सुपि" इत्यस्य सुबन्तस्य सर्वस्येत्यर्थात् 'सर्वप्रियः' इत्यादौ स्वरसिद्धिः "ञ्नि त्यादिर्नित्यम्" इत्यत्र ञिदन्तस्य निदन्तस्येत्यर्थलाभश्चेत्यलम्।

स्वरविधौ व्यञ्जनमविद्यमानवत्—अत्र परिभाषाया ज्ञापकः "नोत्त रपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" इति सूत्रे पृथिव्यादि-पर्युदा अन्यथा पृथिव्यादीनामनुदात्तादित्वाऽभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव। अत एव "तुरत्नुमो नद्यजादी" "अचः कर्तृयकि" इत्यादावजादौ अच इत्यादेश्चारि थ्यम्। अत एव राजवतीत्यादौ नलोपस्याऽसिद्धत्वादन्वती शब्दत्वादन्तोऽत्त्या स्वरोनोदश्वित्वानित्यत्र "ह्रस्वनुड्भ्यामि"ति मतुबुदात्तत्वञ्च नेत्याकरः।

चञ्चेव चञ्चेत्यत्र कनि कनो लुपि प्रत्ययलक्षणेन नित्वात् "ञ्नित्यादि त्यम्" इत्येव सिद्धे "सञ्ज्ञायामुपमानम्" इदं सूत्रं व्यर्थं सत् ज्ञापयति-" चित् स्वरविधौ प्रत्ययलक्षणान्न" इति।

सतिशिष्ट इति—७ पृष्ठे द्रष्टव्यम्।

४—भूपतिः—भुवः पतिः भूपतिः अत्र "समासस्य" इति सूत्रेणाऽन्त दात्ते ततश्च "पत्यावैश्वर्यं" इति सूत्रेण प्रकृतिस्वरे प्राप्ते "न भूवाक्चिदि धिषु" इति तन्निषेधे 'भूपतिः' इति भवति।

दूरादागतः—अत्र प्रयोगे थ, अथ, घञ्, क्त, अच्, अप्, इत्र, एतदन्तानां गतिकारकोपपदात् परेषामन्त उदात्तः स्यादित्यर्थक "थाऽथघञ् क्ताऽजबित्रकाणाम्" इति सूत्रेणाऽन्तोदात्ते 'दूरादागतः' इति भवति।

फलकपुरम्—फलकपुरमित्यत्र "पुरे प्राचाम्" इति सूत्रेण पुरे परेऽन्त दात्तत्वे प्राप्ते "न हास्तिनफलकमार्देयाः" इति सूत्रेण तन्निषेधे "समा स्य" इति सूत्रेणाऽन्तोदात्तत्वे 'फलकपुरम्' इति भवति।

सुवीरेण—अत्र "वीरवीर्यौ च" इत्यनेन सूत्रेणाऽद्युदात्तौ 'सुवीरेण' इति भवति।

अकार्णवेष्टकिकम्—कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकम् नकार्णवेष्टकिक-अकार्णवेष्टकिकम् इत्यत्र "सम्पादिनि" इति सूत्रेण ठञि प्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वात्प्रातिपदिकत्वे "सुपोधातुप्रातिपदिकयोः" इति सूत्रेण सुपो लुकि "ठस्येकः" इति सूत्रेण ठस्येकादेशे "अचोञ्णिति" इति सूत्रेणाऽऽद्यचो वृद्धौ कार्णवेष्टकिकशब्दः निष्पन्नः ततश्च नञ् समासे "नञो गुणप्रतिषेधे सम्पाद्यर्हहिताऽलमर्थास्तद्धिताः" इति सूत्रेणान्तोदात्ते "अकार्णवेष्टकिकम्" इति भवति।

५—बहुव्रीहिकः—अत्र बहुशब्दस्य "फिषोन्त उदात्तः" इति सूत्रेणाऽन्तोदात्ते "बहोर्नञ्वदुत्तरपदभूम्नि" इति सूत्रेण नञः परस्य उत्तरपदस्य इव स्वरविधानेन "नञ्सुभ्याम्" इति सूत्रेणोत्तरपदस्याऽन्तोदात्ते "बहुव्रीहिकः" इति भवति।

प्रतिजनः—इत्यत्र "प्रतेरंश्वादयस्तत्पुरुषे" इति सूत्रेणाऽन्तोदात्ते 'प्रतिजनः' इति भवति।

नह भोत्स्यसे—इत्यत्र "तिङ्ङतिङः" इति सूत्रेण निघातस्वरे प्राप्ते "नह प्रत्यारम्भे" इति तन्निषेधे "तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमन्हिङ्वोः" इति सूत्रेण से इत्यस्य निघाते ततश्च मध्योदात्ते पदे 'नहभोत्स्यसे' इति भवति।

जातु भोत्स्यसे १२ पृष्ठे द्रष्टव्यम्।

काष्ठाध्यापकः—इत्यत्र "मयूरव्यंसकादयश्च" इति समासे काष्ठादयोऽद्भुतपर्यायाः सन्तः पूजनवचना भवन्ति तेन "पूजनात्पूजितमनुदात्तम्" "काष्ठादिभ्य इति वक्तव्यम्" इत्यनेनाऽनुदात्ते "काष्ठाध्यापकः" इति भवति।

१८३१

१—ऋकता गणेन। त्वं नो देवाः। या खर्वेण पिबति तस्यै खर्वः। निष्कर्यम्। अवयाः। प्रण आयूंषि तारिषत्। कुशिकासो अवस्यवः। सोमः सधस्थम्। पीत्वी सोमस्य वावृधे। दद्रिर्गाः। पाथ्यो वृषा। रथीरभूत्।

एषां मध्ये नवसु प्रयोगेषु यानि विशेषकार्याणि तानि शास्त्रनिर्देशपुरस्सरं लेख्यानि



२—नेतराच्छन्दसि। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य।

यद्वितुपरं छन्दसि । ध्यपूर्वस्य स्त्रीविषयस्य ।
एषामर्था उदाहरणानि च लेख्यानि
३—एकश्रुतिः । सन्नतरः । उपग्रहः । नप् ।
एषां शब्दानामर्थाः प्रदर्शनीयाः
४—हिंसन्ति । इन्धानः । जाया । स्वाहा । त्रिभिष्ट्वं । मद्रसविध
म् । महाव्रीहिः । मल्लग्रामः । उपकूलम् । देवमित्रः । यो भुङ्क्ते
काष्ठाध्यापकः । आग्नेयः ।
एषां मध्ये नवसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपा
नीयाः

## प्रश्नोत्तराणि—

१—ऋकता गणेन–अयस्मयादीनिच्छन्दसि साधूनि भवन्तीत
र्थक "अयस्मयादीनि छन्दसि" इति सूत्रस्थायस्मयादिगणे ऋक्तेत्यादि
ठात् "उभयसंज्ञान्यपीति वक्तव्यम्" इति वार्तिकबलात् सत्यां पदसंज्ञा
"चोः कुः" इत्यनेन कुत्वे भसंज्ञायाञ्च जातायां जश्त्वाऽभावे "ऋक्ता" इत
सिद्धिः कुतः जश्त्वविधानार्थायाः पदसंज्ञायाः भत्वसामर्थ्येन बाधात् । अन्य
जश्त्वमेव स्यात् कुत्वं नस्यादितीष्टप्रयोगहानिः स्यात् । अतः पदत्वात्कुत्वं भत्व
जश्त्वाऽभाव एव । नचात्र "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा
इति न्यायम्बाधित्वोभयसंज्ञाविधाने किम्प्रमाणमानन्तर्यादेकैव स्यादिति वाच्यम
उभयसंज्ञान्यपीति वार्तिकबलात् ।

त्राध्वं नो देवाः—१० पृष्ठे द्रष्टव्यम् ।

या खर्वेण पिबति तस्यै खर्वः–इत्यत्र "षष्ठ्यर्थे चतुर्थीति वाच्यम
इत्यनेन षष्ठिस्थाने चतुर्थी "तस्यै" इति तेन 'या खर्वेण पिबति तस्
खर्वः' इति भवति ।

निष्टर्क्यम्—निसुपसर्गपूर्वककृत्–धातोः "ऋदुपधाच्च" इति सू
क्यपि प्राप्ते तम्प्रबाध्य "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यम
स्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्यो
पचाय्यपृडानि" इति सूत्रेण निपातनात् ण्यति प्रत्यये आद्यन्तयोर्विपर्यये नि
षत्वे गुणे रपरे ष्टुत्वे विभक्तिकार्ये 'निष्टर्क्यम्' इति भवति ।

अवयाः—अवपूर्वकयज्धातोः "अवयाः श्वेतवाः पुरोडाश्च" इत्यनेन निपातनात् ङस्प्रत्ययेऽनुबन्धलोपे डित्वाट्टिलोपे सम्बुद्धचेकवचने सौ निपातनात् दीर्घे सुलोपे रुत्वे विसर्गे च "अवयाः" इति भवति । नन्विदं सूत्रं व्यर्थम् "मन्त्रे श्वेतवहो" इत्यादिना ङसि कृते सौ "अत्वसन्तस्य चाऽधातोः" इति दीर्घे रुत्वे विसर्गे अवयाः, श्वेतवाः इत्यादिसिद्धमिति चेन्न सम्बुद्धिग्रहणस्य "अत्वसन्तस्य चाधातोः" इति सूत्रेऽधिकारात् सम्बुद्धौ अवयाः इत्यादौ अत्वसन्तस्येति सूत्रस्याऽप्रवृत्तेरिति दिक् ।

प्रण आयूंषि तारिषत्—२३ पृष्ठे द्रष्टव्यम् ।

कुशिकासो अवस्यवः—अत्र प्रयोगे "एङः पदान्तादति" इति सूत्रेण पररूपे प्राप्ते तम्प्रबाध्य "अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च" इति सूत्रेण प्रकृतिभावे "कुशिकासो अवस्यवः" इति भवति ।

सोमः सधस्थम्—सह तिष्ठतीति सधस्थ इति विग्रहे सहपूर्वकस्थाधातोः "आतोऽनुपसर्गे कः" इति कप्रत्ययेऽनुबन्धलोपे आर्द्धधातुकत्वे "आतो लोप इटि च" इत्याकारस्य लोपे "सधमादस्थयोश्छन्दसि" इति सूत्रेण सहस्य सधादेशे विभक्तिकार्ये 'सधस्थम्' इति सिद्धम् ।

पीत्वी सोमस्य वावृधे—पिबतेः क्त्वा प्रत्ययेऽनुबन्धलोपे आर्द्धधातुकत्वे "घुमास्थागापाजहातिसां हलि" इति सूत्रेण पकारोत्तराकारस्येकारे पीत्वा इति जाते "स्नात्व्यादयश्च" इति सूत्रेणाकारस्येकारे 'पीत्वी' इति भवति ।

ददिर्गाः—दाधातोः "आदृगमहनजनः किकिनौ लिट् च" इति सूत्रेण किप्रत्यये लिड्वद्भावे च अनुबन्धलोपे लिड्वद्भावात् द्वित्वे अभ्यासत्वे ह्रस्वे "आतो लोप इटि च" इत्याकारलोपे ददि इत्यस्मात् सौ रुत्वे विसर्गे "ददिः" इति भवति । अत्र किकिनोः स्थाने तिबादयस्तु न लिड्वदतिदेशेन स्वरूपाऽबाधेनैव कार्यातिदेशात् ।

पाथ्यो वृषा—पाथसि जले भवः पाथ्यः इति विग्रहे "पाथो नदीभ्यां ड्यण्" इति ड्यण्प्रत्ययेऽनुबन्धलोपे डित्वाल्टिलोपे प्रातिपदिकत्वे विभक्तिकार्ये 'पाथ्यः' इति भवति ।

रथीरभूत्—रथोऽस्याऽस्तीति रथीरिति विग्रहे रथशब्दात् "छन्दसीवनिपौ च वक्तव्यौ" इति सूत्रेण ईप्रत्ययेऽकारस्य लोपे रथीशब्दात् सौ रुत्वे विसर्गे "रथीः" इति सिद्धम् ।

२—नेतराच्छन्दसि—इतरशब्दात्परयोः स्वमोरद्डादेशो न स्याच्छन्दसि इत्यर्थः उदाहरणञ्चात्र 'वार्त्रघ्नमितरम्' इति ।

"उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" इति सूत्रस्वरूपम् उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्याऽनुदात्तस्य स्वरितः स्यात् इत्यर्थः । अभ्यभि हि । स्वरितयणः—खलप्व्याशा । इत्युदाहरणानि ।

यद्धितुपरं छन्दसि—इति सूत्रस्वरूपम् । यद्धितुपरं तिङन्तं नाऽनुदात्तम् इत्यर्थः । 'उदसृजो यदङ्गिरः' 'उशन्ति हि' 'आख्यास्यामि तु' इत्युदाहरणानि ।

ष्यपूर्वस्य स्त्रीविषयस्य—इति सूत्रस्वरूपम् । षकारयकारपूर्वो योऽन्त्योच् स उदात्तः स्यात् । इत्यर्थः । अन्तर्द्धा । छाया । माया । जाया इत्युदाहरणानि ।

३—एकश्रुतिर्नाम—उदात्तादीनां स्वराणामविभागेनाऽवस्थानमेकश्रुतिः

सन्नतरः—अनुदात्ततरः इत्यर्थः ।

उपग्रहः—परस्मैपदात्मनेपदे ।

नप्—नपुंसकम् ।

४—हिंसन्ति—अत्र "श्वपादिहिंसामच्यनिटि" इति सूत्रेण लसार्वधातुके परे वैकल्पिकाऽद्युदात्ते "हिंसन्ति" पक्षे प्रत्ययस्वरेण मध्योदात्तत्वे "हिंसन्ति" इति भवति ।

इन्धानः—२१ पृष्ठे द्रष्टव्यम् ।

जाया—२१ पृष्ठे द्रष्टव्यम् ।

स्वाहा—इत्यत्र "निपाता आद्युदात्ताः" इति सूत्रेणाद्युदात्तत्वे 'स्वाहा' इति भवति ।

त्रिभिष्ट्वम्—इत्यत्र "षट्त्रिचतुर्भ्यो हलादिः" इति सूत्रेण त्रिशब्दात्परस्य हलादिविभक्तेरुदात्तत्वे भिसः उदात्तत्वं सिद्ध्यति । नात्र सूत्रे "अन्तोदात्तात्" इत्यस्याऽनुवृत्तिः । अनुवृत्तौ पञ्चानां नवानां चतुर्णामित्यत्र न स्यात् । "न्नः संख्यायाः" इत्याद्युदात्तत्वात् । नो तर्हि क्व स्यात् सप्तानामष्टानाम् । अत्र सप्ताष्टशब्दौ घृतादित्वादेव "घृतादीनाञ्च" इत्याद्युदात्ताविति दिक् ।

मद्रसविधम्—मद्रस्य सविधम् मद्रसविधमित्यत्र षष्ठीसमासे "समा

स्य" इति सूत्रेणाऽन्तोदात्ते प्राप्ते तम्प्रबाध्य सामीप्यार्थेषु सविधादिषूत्तरपदेषु पूर्वपदं प्रकृत्या स्यात्तत्पुरुषे इत्यर्थक "सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये" इति सूत्रेण पूर्ववदप्रकृतिस्वरे 'मद्रसविधम्' इति । अत्र मद्रशब्दो रगन्तोऽन्तोदात्तः इति बोध्यम् ।

**महाव्रीहिः**—महांश्चासौ व्रीहिरिति विग्रहे समासे समासत्वात् प्रातिपदिकत्वे सुपो लुकि "**आन्महतः समानाधिकरणजातीययोः**" इति सूत्रेणात्वे "**समासस्य**" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "**महान्व्रीह्यपराह्णगृष्टीष्वासजाबाल भारभारत हैलिहिलरौरवप्रवृद्धेषु**" इति सूत्रेण व्रीहिपरे महच्छब्दस्य प्रकृतिभावे "**महाव्रीहिः**" इति अत्र महच्छब्दोऽन्तोदात्तः इति ज्ञेयम् ।

**मल्लग्रामः**—मल्लानां ग्राम इति विग्रहे समासे सुपो लुकि "**समासस्य**" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "**ग्रामेऽनिवसन्तः**" इति सूत्रेण ग्रामे परे पूर्वपदस्योदात्तत्वे **मल्लग्रामः** इति भवति ।

**उपकूलम्**—कूलस्य समीपमिति विग्रहेऽव्ययीभावसमासे कूलादीन्युत्तरपदान्याद्युदात्तानि स्युरित्यर्थक "**कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे**" इति सूत्रेणाद्युदात्तत्वे **उपकूलम्** इति भवति ।

**देवमित्रः**— इत्यत्र मित्राजिनयोरुत्तरपदयोरन्त उदात्तः स्यात् बहुव्रीहौ संज्ञायामित्यर्थक "**संज्ञायां मित्राऽजिनयोः**" इति सूत्रेणाऽन्तोदात्ते देवमित्रः' इति भवति ।

**यो भुङ्क्ते**—अत्र यो इति प्रतिपदिकस्वरेणान्तोदात्तः ततश्च "**तिङ्ङतिङः**" इति सूत्रेण निघाते प्राप्ते "**यद्वृत्तान्नित्यम्**" इति सूत्रेणाऽनुदात्तनिषेधे '**यो भुङ्क्ते**' इति भवति ।

**काष्ठाऽध्यापकः**—२७ पृष्ठे द्रष्टव्यम् ।

**आग्नेयः**—अग्निशब्दात् "**अग्नेर्ढक्**" इति सूत्रेण ढकि प्रत्यये तद्धितान्तत्वात्प्रतिपदिकत्वे सुपो लुकि आद्यचो वृद्धौ ढस्य "**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**" इति सूत्रेण ढस्यैयादेशे विभक्तिकार्ये "**कितः**" इति सूत्रेणाऽन्तोदात्ते '**आग्नेयः**' इति भवति ।

१८३२

**१—मनुष्वदग्ने । दाति प्रियाणि । ब्रह्मवाद्यम् । गृभाय जिह्वया मधु ।**

दातवा उ। अनुसख्या सयूथ्यः। मघव्यः। कथा दाशेम। स तूताः। ईषा अक्षो हिरण्ययः। अस्मे प्रयन्धि। अश्वायन्तो मघवन्।
एषां मध्येऽष्टसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि सूत्रनिर्देशपुरःसरं प्रदर्शनीयानि

२—ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे। स्वरितो वाऽनुदात्ते पदादौ। श्र तवै युगपत्। नञ्विषयस्यानिसन्तस्य।
एषामर्था उदाहरणानि च लेख्यानि

३—शिट्। अवग्रहः। न्यूङ्खाः। यद्वृत्तम्।
एषां शब्दानामर्था लेख्याः

४—वोश्वाः। चिकीर्षकः। सर्वे। वंहिष्ठः। पटुपटुः। कौशायना। आहवनीये पाणिन्युपञ्चम्। पञ्चदिष्टिः। गोपालः। सुग्रीवः। आवसथः। हन्त प्रविश।
एषां मध्येऽष्टसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः

५—गतिकारकोपपदात्कृदिति सूत्रे कृद्ग्रहणप्रयोजनं प्रतिपादनीयम्

## प्रश्नोत्तराणि—

१—मनुष्वदग्ने—मनुषा तुल्यम्–'मनुष्वत्' अत्र "जनेरुसिः" विहितः उसि प्रत्ययो बाहुलकान्मनेरपि भवति ततश्च उसि मनुष् इत्यत्र भत् "आदेशप्रत्यययोः" इति षत्वे तुल्यार्थे सति प्रत्यये "यचि भम्" इति भात् लात्–"नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्" इति वार्तिकेन वति उपसंख्या नात् 'मनुष्वत्' इति सिद्धम्।

दाति प्रियाणि—दाधातोः लटि तिपि शपि "बहुलं छन्दसि" इति अदादिभिन्नेऽपि क्वचिल्लुक् तेनात्रादादिभिन्नेऽपि शपो लुकि "दाति" इति सिद्धम् लोके तु 'ददाति' इति भवति।

ब्रह्मवाद्यम्—ब्रह्मोपपदाद्वदधातोः "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इत्यनेन ब्रह्माणि वदेर्ण्यति अनुबन्धा आयचो वृद्धौ विभक्तिकार्ये "ब्रह्मवाद्यम्" इति सिद्धम्।

गृभाय जिह्वया मधु—ग्रहधातोः लोटि सिपि सेर्हौ श्नाप्रत्यये शानच

प्राप्ते "छन्दसि शायजपि" इति सूत्रेण श्नः शायजादेशेऽनुबन्धलोपे सम्प्रसा-
रणे पूर्वरूपे "हृग्रहोर्भश्छन्दसि" इति हस्य भकारे "गृभाय" इति सिद्धम् ।
लोके 'गृहाण' इति भवति ।

दातवा उ—दा धातोः तुमर्थे "तुमर्थे सेसेनसे ऽसेन्क्सेकसेन-
अध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः" इति सूत्रेण तवै प्र-
त्यये दातवै + उ इति जाते आयादेशे "लोपः शाकल्यस्य" इति यलोपे 'दात-
वा उ' इति सिद्धम् ।

अनुसखा सयूथ्यः—१५ पृष्ठे द्रष्टव्यम् ।

मघव्यः—१५ पृष्ठे द्रष्टव्यम् ।

कथा दाशेम—केन प्रकारेण पृच्छसि इत्यर्थे किम्शब्दात् "था हेतौ च
च्छन्दसि" इत्यनेन किमस्था प्रत्यये तस्य "प्राग्दिशो विभक्तिः" इत्यधि-
काराद्विभक्तिसंज्ञायां "किमः कः" इति कादेशे 'कथा' इति सिद्धम् ।

स तूताव—तुः इति सौत्रो धातुस्तस्माल्लिटि तिपि णलादेशेऽनुबन्धलोपे
आर्द्धधातुकत्वे द्वित्वे वृद्धौ आवादेशे "तुताव" इति स्थिते "तुजादीनां दीर्घोऽ-
भ्यासस्य" इत्यभ्यासस्य दीर्घे, 'तूताव' इति सिद्धम् ।

ईषा अक्षो हिरण्ययः—इत्यत्र "ईषा अक्षादीनां छन्दसि प्रकृतिभा-
वो वक्तव्यः" इति वार्तिकेन प्रकृतिभावे 'ईषा अक्षो हिरण्ययः' इति भवति ।

अस्मे प्रयन्धि—प्रपूर्वकयम्धातोर्लोटि सिपि "सेर्ह्यपिच्च" इति हि
इत्यादेशे शपि छन्दसि पक्षे पित्वादङित्वे "अङितश्च" इति हेर्धि इत्यादेशे 'ब-
हुलं छन्दसि' इति शपो लुकि "प्रयन्धि" इति भवति ।

अश्वायन्तो मघवन्—अश्वशब्दात्, क्यच्यनुबन्धलोपे "अश्वाघस्या-
त्" इति सूत्रेणादादेशे 'अश्वाय' इति जाते लटि लटः स्थाने शत्रादेशेऽनुबन्धलोपे
जसि विभक्तिकार्ये 'अश्वायन्तः' इति सिद्धम् ।

२—ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे । इति सूत्रस्वरूपम् । ह्रस्वात्परस्य च-
न्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे । इत्यर्थः । हरिश्चन्द्रो मरुद्गणः ।
सुश्चन्द्र दस्म । इत्युदाहरणम् ।

स्वरितो वाऽनुदात्ते पदादौ । इति सूत्रस्वरूपम् । अनुदात्ते पदादौ परे
उदात्तेन सहैकादेशः स्वरितो वा स्यात् । इत्यर्थः । वी इदं ज्योतिर्हृदये । अस्य

श्लोको दिवीयंते। इत्युदाहरणम्।

अन्तश्च तवै युगपत्। इति सूत्रस्वरूपम्। तवै प्रत्ययान्तस्याऽऽद्य युगपदुदात्तौ स्तः। इत्यर्थः। हर्षसे दातवा उ। इत्युदाहरणम्।

नञ्विषयस्याऽनिसन्तस्य। इति सूत्रस्वरूपम्। इसन्तवर्जितस्य नि नपुंसकस्याऽऽदिरुदात्तः स्यात्। इत्यर्थः। वने न वायः। इत्युदाहरणम्।

३—शिट्—सर्वनाम।

अवग्रहः—अवगृह्यते = विच्छिद्य पठ्यते इति "अवग्रहः"।

न्यूङ्खाः—षोडश ओंकाराः।

यद्वृत्तम्—यच्छब्दनिष्पन्नः।

४—वोश्वाः—"बहुवचनस्य वस्नसौ" इत्यत्र "अनुदात्तं सर्वम दादौ" इत्यस्याऽधिकारात् 'वस्' इत्यस्याऽनुदात्तत्वे अशेः क्वनिति व्युत्पादना शब्दस्यापि आद्युदा॰ वसो रुत्वे उत्वे "एङः पदान्तादति" इति पूर्वरूपे कादेश उदात्तेनोदात्तः" इति सूत्रेण स्वरिते 'वोऽश्वाः' इति भवति।

चिकीर्षकः—चिकीर्षेति सन्नन्ताण्ण्वुलि तस्यानुबन्धलोपेऽकादेशे पर सनोऽतो लोपे "लिति" इति सूत्रेणेकारस्योदात्तत्वे 'चिकीर्षकः' इति। नच कर्तव्येऽल्लोपस्य स्थानिवत्त्वम् "स्वरदीर्घयलोपेषु लोपाऽजादेश एव स्थानिवत्" इति निषेधात्। नच स्वरस्य नित्यत्वेन "परनित्यान्तरङ्गापवा नामुत्तरोत्तरं बलीय" इति न्यायेन कथं परत्वादल्लोप इति वाच्यम् न्तरस्य प्राप्त्या तस्याऽनित्यत्वात्।

सर्वे—सर्वशब्दाज्जसि विभक्तिकार्ये "सर्वस्य सुपि" इति सूत्रेण सु सर्वशब्दस्याद्युदात्तत्वे 'सर्वे' इति।

बंहिष्ठः—अतिशयेन बहुलः बंहिष्ठः इति व्युत्पत्तौ बहुलशब्दात् "अ शायने तमबिष्ठनौ" इति सूत्रेण बहुलशब्दात् इष्ठन् प्रत्ययेऽनुबन्धलोपे "प्रि स्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिग त्रप्द्राघिवृन्दाः" इति सूत्रेण बंहिरादेशे नित्यत्वात् "ञ्नित्यादिर्नित्य द्युदात्तत्वे प्राप्ते तम्प्रबाध्य "हिष्ठवत्सरतिशत्थान्तानाम्" इति न्तोदात्ते 'बंहिष्ठः' इति सिद्धम्।

पटुपटुः—इत्यत्र "प्रकारादिद्विरुक्तौ परस्याऽन्तः उदात्तः"

सूत्रेणाऽन्तोदात्ते 'पटुपटुः' इति भवति। ननु "कर्मधारयवदुत्तरेषु" इति कर्मधारयवद्भावादेव "समासस्य" इत्यन्तोदात्तत्वे सिद्धे व्यर्थमिदमिति वाच्यम् तस्य पाणिनीयात्पूर्वं प्रवृत्तत्वेनाऽदोषात्।

कौञ्जायनाः—कुञ्जस्याऽपत्यानि बहूनि इति कृविग्रहे "गोत्रे कुञ्जादिभ्यश्च्फञ्" इति च्फञ्प्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वात्प्रातिपदिकत्वे सुपो लुकि फस्यायनादेशे वृद्धौ "व्रातच्फञोरस्त्रियाम्" इति सूत्रेण ञ्यप्रत्यये "ञ्याद्यस्तद्राजाः" इति तद्राजसञ्ज्ञायां "तद्राजस्य बहुषु" इति लुकि विभक्तिकार्ये "तद्धितस्य" इति सूत्रेणाऽन्तोदात्ते "कौञ्जायनाः" इति। ननु "चितः सप्रकृतेर्बह्वकजर्थम्" इत्यनेनैवाऽन्तोदात्तत्वे सिद्धे सूत्रमिदं व्यर्थमिति वाच्यम् ञित्स्वरबाधनार्थमस्याऽवश्यकत्वात्।

आह्वनीये—बाहुलकादधिकरणे प्रीणानार्थात् कर्मणि वा अनीयर प्रत्यये ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरे "उपोत्तमं रिति" इति सूत्रेणोपोत्तमस्योदात्तत्वे 'आहवनीये' इति भवति।

पाणिन्युपज्ञम्—उपज्ञायते इत्युपज्ञम् अत्र "आतश्चोपसर्गे" इति कर्मण्यङ् पाणिनिशब्द इञत्वादाद्युदात्तः ततश्च पाणिनेरुपज्ञा इति षष्ठीतत्पुरुषे समासे 'उपज्ञोपक्रममि'त्यादिना नपुंसकत्वे "समासस्य" इत्यन्तोदात्ते प्राप्ते तम्प्रबाध्य "मात्रोपज्ञोपक्रमच्छाये नपुंसके" इति सूत्रेण पूर्वपद कृतिस्वरे "पाणिन्युपज्ञम्" इति सिद्धम्।

पञ्चदिष्टिः—अत्र "समासस्य" इति सूत्रेण नित्यान्तोदात्तत्वे प्राप्ते 'द्विष्टिवितस्त्योश्च" इति सूत्रेण वैकल्पिकपूर्वपदप्रकृतिस्वरे "पञ्चदिष्टिः" इति। पक्षे अन्तोदात्ते 'पञ्चदिष्टिः' इति भवति।

गोपालः—गाः पालयतीति गोपालः इत्यत्र "गोतन्तियवं पाले" इति सूत्रेण पालशब्दे परे आद्युदात्ते 'गोपालः' इति।

सुग्रीवः—इत्यत्र "कण्ठपृष्ठग्रीवाजङ्घञ्च" इति सूत्रेण उत्तरपदस्याद्युदात्तत्वे 'सुग्रीवः' इति।

आवसथः—२२ पृष्ठे द्रष्टव्यम्।

हन्त प्रविश—१६ पृष्ठे द्रष्टव्यम्।

५—गतिकारकोपपदात्कृत्—अत्र सूत्रे कृद्ग्रहणङ्किमर्थम्। निर्गतः

कौशाम्ब्याः निष्कौशाम्बिरित्यत्र माऽभूत्। नैतदस्ति। 'यत्क्रियायुक्ताः प्रादयः प्रत्येव गत्युपसर्गसञ्ज्ञा' भवन्ति। न च कौशाम्बीशब्दम्प्रति क्रियायोगः कारक क्रियायामेव सम्भवति। उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्त च्यते। तदेवं गत्यादिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते, धातोश्च क्रियावाचित तस्माच्च द्वये प्रत्ययाः तिङः कृतश्च। तत्र तिङन्तेन समासाऽभावात् कृदन्तं सम्भवति। 'अनुव्यचलत्' इत्यत्र तु न गतित्वनिबन्धन समासः किं "सुप" इति योगविभागात् समासः। तस्मान्नार्थः कृद्ग्रहणेनेत्यत आह- "कृद्ग्रहणं विस्पष्टार्थमिति" य एवं प्रतिवक्तुमसमर्थस्तं प्रति विस्प क्रियते इत्यर्थः।

ननु विस्पष्टार्थमपि क्रियमाणे कृद्ग्रहणे आमन्ते न प्राप्नोति प्रपचतितरामि ततश्च समासस्वरं बाधित्वाऽव्ययस्वरः एव स्यादत आह—'प्रपचतितरामित्या दि। इत्येके इत्यस्य कृद्ग्रहणं विस्पष्टार्थमित्यादिना कृत्स्नेन सम्बन्धः। तदयम् कृद्ग्रहणं विस्पष्टार्थम्। आमन्ते च दोषाऽभाव इति केचिदाचार्या व्याचक्षते इ प्रपचतिदेश्यार्थं त्विति। आदिशब्देन 'प्रपचति कल्पं' 'प्रपचतिदेशीयः' 'प्र चतिरूपमि'त्येतेषां त्रयाणाम् ग्रहणम्। प्रपचतिदेश्यादौ अर्थः प्रयोजनं यस्य तत् त्थम्। अयमभिप्रायः न विस्पष्टार्थं कृद्ग्रहणम्। अपि तु प्रपचतिदेश्यादौ यत्र शिष्टं स्वरान्तरं नास्ति तत्रापि स्वरो माभूदव्ययपूर्वपदप्रकृतिस्वर एव यथा स्या त्येवं सप्रयोजनमाहुः।

अत्र हरदत्तः—इदं तु वक्तव्यम्। प्रपचतितरामित्यादौ तरबन्तेन स पश्चादाम् भवन् प्रत्ययग्रहणपरिभाषया पचतितरस्यैव धान्तत्वात्तत एव स्या तत्र को दोषः। सोपसर्गस्य धान्तस्यैकपदाऽभावादाम्। प्रपचतितरां देव स्यादौ आम एकान्तरमामन्त्रितमनन्तिके इत्येष विधिर्न स्यात् शेषनिघातश्च ब्दस्य न स्याद्भिन्नपदत्वात्तस्मात् प्रशब्दस्यामन्तेन समासोऽङ्गीकर्तव्यो न बन्तेन, तत्र समासत्वात् समुदायस्य प्रातिपदिकत्वे विभक्तावैकपद्यं भवति, तु दोषप्रसङ्गात् कृद्ग्रहणमपि वक्तव्यमिति भाष्ये स्थितम्। एवं स्थिते प्रप देश्यादौ का गतिरिति जानन्तु सुधियः।

१८३३

१—वृषण्वसुः। वृत्रं हनति वृत्रहा। चक्राणा वृष्णिम्। अद्य मम

दद्विर्गाः । ईश्वरा विलिखः । चनो दधीत नाद्यो गिरो मे । सोम्यो ब्राह्मणः । ब्रह्मसामं भवति । उपप्रयन्तो अध्वरम् । न मर्ता। त्मना देवेषु । देवासः । हरिवो मेदिनं त्वा ।

एषां मध्ये नवसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि । १८

२—लोपस्त आत्मनेपदेषु । उदात्तस्वरितपरस्य सन्नतरः । लघावन्ते द्वयोश्च वह्वषो गुरुः । आचार्योपसर्जनश्चान्तेवासिनि ।

एषामर्थां उदाहरणानि च लेख्यानि । १०

३—सर्वस्य । ईड्यः । तिलाः । स्वाहा । आग्नेयः । आहवनीये । गोलवणम् । साङ्काश्यसिद्धः । यूपदारु । तन्तुवायः । श्रीसभम् । कश्चिद्भुङ्क्ते । अनुपुरुषः ।

एषां मध्ये नवसु प्रयोगेषुससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः । १८

४—तिङि चोदात्तवतीति सूत्रे तिङ्ग्रहणप्रयोजनं प्रतिपादनीयम् । ४

## प्रश्नोत्तराणि—

१—वृषण्वसुः—वृषवर्षकं वसु यस्यासौ वृषण्वसुरित्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपे प्राप्ते वृषन्नित्येतद् वसु—अश्व—एतयोश्च परतो भं स्यात् इत्यर्थक—"वृषण्वस्वश्वयोः" इत्यनेन भत्वाद्वार्यते । अत एव (भत्वादेव) "पद्यान्तस्य" इत्यनेन णत्वनिषेधोऽपि न भवति । "अल्लोपोऽनः" इति सूत्रे "अङ्गस्य" इत्यधिकारात् "अल्लोपोऽनः" इत्यल्लोपो न अनङ्गत्वात् ।

वृत्रं हनति वृत्रहा—अत्र वाक्यांशे हनतीत्यत्र हन् धातोः लटि तिपि शपि "अदिप्रभृतिभ्यः शपः" इति शपो लुकि प्राप्ते "बहुलं छन्दसि" इत्यनेन बाहुल्यात् शपो लुगभावे "हनति" इति भवति ।

चक्राणा वृष्णिम्—'कृ' धातोः लिटि तस्य स्थाने "लिटः कानज् वा" "कसुश्च" इति सूत्रेण कानजादेशेऽनुबन्धलोपे द्वित्वे "उरत्" इत्यत्वे रपरत्वे "हलादिः शेषः" इति रेफस्य लोपे "कुहोश्चुः" इति चुत्वे यणादेशे णत्वे टापि विभक्तिकार्ये 'चक्राणा' इति सिद्धम् ।

अद्य ममार—अत्र वाक्यांशे "ममार" इत्यत्र वर्तमानकालिकलटप्रयोग-

स्थानेऽपि "छन्दसि लुङ्लङ्लिटः" इति सूत्रेण लिटि लिण्निमित्तका "ममार" इति। पक्षे "म्रियते" इति भवति।

ददिर्गाः—२९ पृष्ठे द्रष्टव्यम्।

ईश्वरो विलिखः—अत्र प्रयोगांशे "विलिखः" इत्यत्र विपूर्वकलिख धातोः तुमर्थे "ईश्वरे तोसुन्कसुनौ" इति सूत्रेण कसुन् प्रत्ययेऽनुबन्धलो कित्वात् गुणाऽभावे "क्त्वातोसुन्कसुनः" इति सूत्रेणाव्ययत्वे अव्ययत्वात् "अव्ययादाप्सुपः" इति सुपो लुकि 'विलिखः' इति। अत्र प्रत्ययलक्षणत "अत्वसन्तस्य चाऽधातोः" इति दीर्घस्तु न भवति "न लुमताऽङ्गस्य" इ प्रत्ययलक्षणनिषेधात्।

चनो दधीत नाद्यो गिरो मे—अत्र वाक्यांशे 'नाद्यः' इत्यत्र नद्यां इति विग्रहे "पाथो नदीभ्यां ड्यण्" इति ड्यण्प्रत्ययेऽनुबन्धलोपे णित्वा च्चो वृद्धौ डित्वाट्टिलोपे विभक्तिकार्ये 'नाद्यः' इति सिद्धम्।

सोम्यो ब्राह्मणः—सोममर्हति इति विग्रहे "सोममर्हति यः" इति सू सोमशब्दात् यप्रत्ययेऽकारस्य लोपे प्रातिपदिकत्वे सौ रुत्वे विसर्गे सोम्यः इ भवति। यज्ञार्ह इत्यर्थः।

ब्रह्मसामं भवति—ब्रह्मसाममित्यत्र तत्पुरुषाट्टच् स्यात् समासान्त इत्यर्थः "अनसन्तान्नपुंसकाच्छन्दसि" इति सूत्रेण टचि प्रत्ययेऽनुबन्धलोपे शेषक "ब्रह्मसामं" इति सिद्धम्।

उपप्रयन्तो अध्वरम्—अत्र प्रयोगे "एङः पदान्तादति" इति सूत्रे पूर्वरूपे प्राप्ते "प्रकृत्यान्तः पादमव्यपरे" इति प्रकृतिभावे 'उपप्रयन्तो अ ध्वरम्' इति भवति।

नू मर्तः—६ पृष्ठे द्रष्टव्यम्। त्मना देवेषु—१९ पृष्ठे द्रष्टव्यम्।

देवासः—देवशब्दाज्जसि विभक्तावनुबन्धलोपे "आज्जसेरसुक्" इ सूत्रेण जसोऽसुगागमेऽनुबन्धलोपे कित्वात् "आद्यन्तौ टकितौ" इति सूत्रे कित्वादन्त्यादच परत्वे पूर्वसवर्णदीर्घे सस्य रुत्वे विसर्गे "देवासः" इति सिद्धम्।

'हरिवो मेदिनं त्वा'—२० पृष्ठे द्रष्टव्यम्।

र—लोपस्त आत्मनेपदेषु—इति सूत्रस्वरूपम्। आत्मनेपदेषु यस्तक तस्य छन्दसि विषये लोपः स्यात् इत्यर्थः। देवा अदुह। दक्षिणतः शये।

इत्युदाहरणम् ।

उदात्तस्वरितपरस्य सन्नतरः—उदात्तस्वरितौ परौ यस्मात् तस्याऽनुदात्तस्याऽनुदात्ततरः स्यादित्यर्थः । सरस्वति शुतुद्रि । व्यचक्षयत्स्वः । इत्युदाहरणम् ।

लघावन्ते द्वयोश्च बह्वषो गुरुः—अन्ते लघौ द्वयोश्च लघ्वोः सतोर्बह्वच्कस्य गुरुरुदात्तः स्यादित्यर्थः । कल्याणः कोलाहलः । इत्युदाहरणम् ।

आचार्योपसर्जनश्चान्तेवासिनि—आचार्योपसर्जनान्तेवासिनि परे दिक्छब्दाः अन्तोदात्ता भवन्ति इत्यर्थः । पूर्वपाणिनीयाः । इत्युदाहरणम् ।

३—सर्वस्य—अत्र "सर्वस्य सुपि" इति सूत्रेण सुपि परे सर्वशब्दस्याऽऽद्युदात्ते "सर्वस्य" इति भवति ।

ईड्यः—स्तुत्यर्थक ईड्-धातोः "ऋहलोर्ण्यत्" इति ण्यति अनुबन्धलोपे "ईडवन्दवृशंसदुहां ण्यतः" इति सूत्रेण ण्यदन्तस्याऽऽद्युदात्तत्वे 'ईड्यः' इति भवति ।

तिलाः—अत्र "तृणधान्यानाञ्च द्व्यषाम्" इत्यनेनाऽऽद्युदात्ते 'तिलाः' इति भवति ।

स्वाहा—३०-पृष्ठे द्रष्टव्यम् ।

आग्नेयः—३१ पृष्ठे द्रष्टव्यम् ।

आहवनीये—३५ पृष्ठे द्रष्टव्यम् ।

गोलवणम्—अत्र "गमेर्डोः" इति सूत्रेण डोप्रत्ययेऽनुबन्धलोपे डित्वाट्टिलोपे षष्ठीसमासे "समासस्य" इत्यन्तोदात्तत्वे प्राप्ते "गाधलवणयोः प्रमाणे" इति सूत्रेण पूर्वपदप्रकृतिस्वरे जाते "गोलवणम्" पूर्वपदस्तु डोप्रत्ययान्तोऽन्तोदात्त इति बोध्यम् ।

साङ्काश्यसिद्धः—"वुञ्छण्" इत्यादिसूत्रेण सङ्काशशब्दात् ण्यप्रत्यये तेनान्तोदात्तेऽनुबन्धलोपे आद्यचो वृद्धौ अकारस्य लोपे च ततः समासे "समासस्य" इति सूत्रेणान्तोदात्ते प्राप्ते तम्प्रबाध्य "सप्तमीसिद्धशुष्कपक्वबन्धेष्वकालात्" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'साङ्काश्यसिद्धः' इति भवति । पूर्वपदस्त्वन्तोदात्तः ।

यूपदारु—यूपाय दारु इति यूपदारु अत्र समासे "समासस्य" इत्य-

न्तोदात्ते प्राप्ते "चतुर्थी तदर्थे" इति सूत्रेण चतुर्थ्यन्तस्य प्रकृतिभावे पूर्वपदप्रकृतिस्वरे "यूपदारु" इति भवति। अत्र निदिति दीर्घश्चेत्यनुवर्तमाने "कुगुभ्यां च" इति सूत्रेण पप्रत्यये दीर्घे च यूप इति जातः स। च नित्वादाद्युदात्त इति बोध्यम्।

तन्तुवायः—१२ पृष्ठे द्रष्टव्यम्।

स्त्रीसभम्—अत्र "सभायां नपुंसके" इति सूत्रेण पूर्वपदस्याऽन्तोदात्तत्वे 'स्त्रीसभम्' इति भवति।

कश्चिद् भुङ्क्ते—अत्र प्रयोगे "तिङ्ङतिङः" इति सूत्रेण निघातस्वरे प्राप्ते "किं वृत्तं च चिदुत्तरम्" इति सूत्रेण तन्निषेधे 'कश्चिद् भुङ्क्ते' इति भवति।

अनुपुरुषः—अन्वादिष्टः पुरुषः अनुपुरुषः इत्यत्र "पुरुषश्चाऽन्वादिष्टः" इति सूत्रेणान्तोदात्ते "अनुपुरुषः" इति भवति।

४—तिङि चोदात्तवति—अत्र सूत्रे तिङ्ग्रहणं किमर्थम्। उदात्तवतः परिमाणार्थम्। अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाविधानात्। तिङ्ग्रहणाऽभावे धातोरेव क्रियावाचित्वात् गतिसंज्ञानिमित्तमिति धातावेवोदात्तवति निघातः प्रत्यये न स्यात्। कृते तु तिङ्ग्रहणे यं धातुम्प्रति गतित्वं तद्घटके तिङन्ते उदात्तवति परे इत्येवार्थो भवति। तेन यत्करोत्यादिलक्ष्ये धातोः शेषनिघातेन सत्यप्यनुदात्तत्वे तिङन्तस्य उप्रत्ययस्वरेण मध्योदात्तत्वाद् गतेरेव निघातो भवतीति शम्।

१९३४

१—अक्रन्नुषासः। मर्थः। अञ्जाः। पताति विद्युत्। मघवा जभार। न म्लेच्छितवै। सुमङ्गलीरियं वधूः। तृचं सूक्तम्। अभ्रआँ अपः। इष्ट्वीनं देवान्। एषां मध्ये समस्तु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि। १४

२—तयोर्दाहिलौ च च्छन्दसि। स्वाङ्गशिटामदन्तानाम्। उभे वनस्पत्यादिषु युगपत्।

एषामर्थाः उदाहरणानि च लेख्यानि। ८

३—चिकीर्षकः। पन्थाः। घृतम्। कृषिः। अष्टाभिः। क। कुमार

श्रमणा । विश्वदेवः । अध्ययनपुण्यम् । गौरमुखः ।
एषां मध्ये सप्तसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः, यथाशक्ति स्वरचिह्नानि च प्रदर्शनीयानि । १४

४—'उपमानं शब्दार्थप्रकृतावेव' इति सूत्रे प्रकृतिग्रहणप्रयोजनं प्रतिपादनीयम् । ३

५—यद्योभावप्रसन्धानमुकारादि परं पदम् । स्वरान्तं तादृशं विद्याद् यदन्यद्व्यक्तमूष्मणः ॥
इत्यस्य सुस्पष्टं व्याख्या कार्या । ५

६—विवृतिः । अयोगवाहाः । रङ्गः । स्वारी । नादी ।
एषामर्थाः स्पष्टीकरणीयाः । ५

## प्रश्नोत्तराणि—

१—अक्रन्नुषासः—कृधातोर्लुङि तस्य स्थाने झिप्रत्यये च्लौ "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति सूत्रेण च्लेर्लुकि "सार्वधातुकमपित्" इति ङिद्वद्भावेऽडागमेऽनुबन्धलोपे "झोऽन्तः" इति झस्यान्तादेशे झेर्ङित्वाद्गुणाऽभावे यणि "इतश्च"इतीकारस्य लोपे संयोगान्तलोपे 'अक्रन्' इति भवति ।

मर्यः—ङकारेत्संज्ञक मृधातोः "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इति सूत्रेण निपातनात् यत् प्रत्यये गुणे रपरे प्रातिपदिकत्वे सौ रुत्वे विसर्गे च कृते 'मर्यः' इति भवति ।

अब्जाः—अप्सु जाताः अब्जाः इत्यत्राप्युपपदाज्जन् धातोः "जनसनखनक्रमगमो विट्" इति सूत्रेण विट्प्रत्यये विटः सर्वाऽपहारे ततश्च "विड्वनोरनुनासिकस्यात्" इति सूत्रेणात्वे जश्त्वे विभक्तिकार्ये 'अब्जाः' इति भवति ।

पताति विद्युत्—पतनार्थकलृकारेत्सञ्ज्ञकपत्धातोश्छन्दसि लेटि तिपि "लेटोऽडाटौ" इति सूत्रेण तिपः आडागमेऽनुबन्धलोपे 'पताति' इति भवति ।

मघवा जभार—ञकारेत् ह्रञ्हधातोः लिटि तिपि णलि द्वित्वे अभ्यासकार्ये वृद्धौ रपरत्वे 'जहार' अत्र "हृग्रहोर्भश्छन्दसि" इत्यनेन हकारस्य भकारे 'जभार' इति । लोके 'जहार' इति भवति ।

न म्लेच्छितवै—म्लेच्छधातोः "कृत्यार्थे तवैकेन्केन्यत्वनः" इति सूत्रेण तवै प्रत्यये इडागमे सौ विभक्तावव्ययत्वात् सोर्लोपे 'म्लेच्छितवै' इति भवति।

सुमङ्गलीरियं वधूः—सुष्ठु मङ्गलम् सुमङ्गलम् "सुः पूजायाम्" इति समासः। सुमङ्गलमस्ति अस्यां वेति सुमङ्गलीरत्र "छन्दसीवनिपौ च वक्तव्यौ" इत्यनेन सुमङ्गलशब्दात् मत्वर्थे ई प्रत्ययेऽकारस्य लोपे सौ रुत्वे विसर्गे "सुमङ्गलीः" इति भवति।

तृचं सूक्तम्—तिस्रः ऋचः यस्मिन् तत् तृचमिति विग्रहे "ऋक्पूरब्धूःपथामानक्षे" इत्यप्रत्यये "ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि" इत्यनेन ऋचि शब्दे परे त्रेः सम्प्रसारणे उत्तरपदादेर्लोपे च जाते ततश्च सौ अमादेशे पूर्वरूपे च "तृचम्" इति भवति।

अभ्र आँ अपः—अत्र "आङोऽनुनासिकश्छन्दसि" इति सूत्रेण अकारे परे आङोऽनुनासिके "अभ्र आँ अपः" इति भवति। अत्र "उपदेशेऽजनुनासिक इत्" इति इत्संज्ञा तु न भवति सूत्रे उपदेशग्रहणात् इति।

इष्ट्वीनं देवान्—यज्धातोः क्त्वा प्रत्ययेऽनुबन्धलोपे "वचिस्वपियजादीनांकिति" इति सम्प्रसारणे षत्वे ष्टुत्वे "इष्ट्वीनमिति च" इति सूत्रेण ईनमन्तादेशे 'इष्ट्वीनम्' इति भवति।

२—तयोर्दाहिलौ च च्छन्दसि—इति सूत्रस्वरूपम्। इदं तदोर्यथासंख्यं स्तः। इत्यर्थः। इदा हि व उपस्तुतिम्। तर्हि। इत्युदाहरणम्।

स्वाङ्गशिटामदन्तानाम्। इति सूत्रस्वरूपम्। स्वाङ्गवाचिनामदन्तानां सर्वनाम्नामादिरुदात्तः स्यात्। इत्यर्थः। कर्णाभ्यां छुबुकादधि। ओष्ठाविव मधु। विश्वो विहायाः।

"उभे वनस्पत्यादिषु युगपत्"—एषु पूर्वोत्तरपदे युगपत्प्रकृत्या स्यात्, इत्यर्थः। वनस्पतिं वन आ। बृहस्पतिं यः। इत्युदाहरणम्।

३—चिकीर्षकः—३४ पृष्ठे द्रष्टव्यम्।

पन्थाः—पथिन् शब्दात् सौ "पथिमथ्यृभुक्षामात्" इत्यादादेशे "थोन्थः" इति न्थादेशे रुत्वे विसर्गे 'पन्थाः' इत्यत्र "पथिमथोः सर्वनामस्थाने" इति सूत्रेणाऽऽद्युदात्ते 'पन्थाः' इति भवति।

घृतम्—अत्र प्रयोगे "घृतादीनाञ्च" इति सूत्रेणान्तोदात्ते 'घृतम्' इति भवति।

कुक्षिः—अत्र "इगन्तानाञ्च द्व्यषाम्" इति सूत्रेणाद्युदात्ते 'कुक्षिः' इति भवति।

अष्टाभिः—अत्र "अष्टनो दीर्घात्" इति सूत्रेण भिसः उदात्तत्वे 'अष्टाभिः' इति भवति। सूत्रार्थश्च-दीर्घान्तादष्टनः परा सर्वनामस्थानविभक्तिरुदात्ता भवति। अत्र चाष्टन् शब्दे प्राप्तं "झल्युपोत्तमम्" इत्यपवाद्य घृतादित्वादन्तोदात्तत्वं स्यात्। एतेनोत्तरार्थमनुवर्तनार्हस्य च "अन्तोदात्तात्" इत्यस्यापि न प्रकृतसम्बन्धः प्रकृतसूत्रेदीर्घग्रहणात्। अष्टभिः इत्यत्र तु "झल्युपोत्तमम्" इत्यनेनैव स्वरः सिद्धो भवति।

नन्वत्रापि "अष्टन आ विभक्तौ" इत्यनेनैवेष्टसिद्धौ विकल्पस्य च तद्विधावभावादिति चेत्, युक्तम्—इहस्थमेव दीर्घग्रहणमात्वविकल्पमष्टनो ज्ञापयति। नो चेत् दीर्घग्रहणमेव व्यर्थं स्यात्। ज्ञापयति च कृतात्वनिर्देशस्य षट्संज्ञाम्। अन्यथा सावकाशोह्यात्वपक्षेऽष्टनः स्वरः परत्वादनात्वपक्षे षट्स्वरेणैव बाधिष्यते इति किं तर्हि दीर्घग्रहणेनेति शम्।

क्व—अत्र "किमोत्" इत्यति अनुबन्धलोपे तित्प्रत्ययस्यान्तः स्वरितः स्यादित्यर्थक "तित्स्वरितम्" इत्यनेनान्तः स्वरिते "क्वाति" इति सूत्रेण किमः क्वादेशे 'क्व' इति भवति।

कुमारश्रमणा—कुमारी श्रमणा कुमारश्रमणा अत्र "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति परिभाषया "कुमारः श्रमणादिभिः" इति सूत्रेण कुमारीशब्दस्य समासे पुंवद्भावे "समासस्य" इति सूत्रेणाऽन्तोदात्ते प्राप्ते "कुमारश्च" इति सूत्रेण पूर्वपदप्रकृतिस्वरे कुमारशब्दात् पचाद्यच् विधानेन कुमारशब्दस्य "चितः" इत्यनेनान्तोदात्ते "कुमारश्रमणा" इति।

विश्वदेवः—अत्र "समासस्य" इति प्राप्तमन्तोदात्तम्बाधित्वा पूर्वपदप्रकृतिस्वरेण प्राप्तस्याऽद्युदात्तस्यापवादभूतेन "बहुव्रीहौ विश्वं सञ्ज्ञायाम्" इति सूत्रेण पूर्वपदभूतस्य विश्वशब्दस्याऽन्तोदात्ते।

"विश्वदेवः" इति भवति।

अध्ययन पुण्यम्—अध्ययने पुण्यमिति विग्रहे "सुप्सुपा" इति सूत्रेण, सप्तमीति योगविभागाद् वा समासे "सप्तम्याः पुण्यम्" इति सूत्रेण सप्तम्यन्तात्परस्य पुण्यइत्युत्तरपदस्याऽन्तोदात्ते 'अध्ययनपुण्यम्' इति भवति।

गौरमुखः—गौरं (गौरवर्णं) मुखं यस्यासौ गौरमुखः इत्यत्र "मुखं स्वाङ्गम्" इति सूत्रेण मुखमित्युत्तरपदस्याऽन्तोदात्ते 'गौरमुखः' इति।

४—उपमानं शब्दार्थप्रकृतावेव—इति सूत्रेऽसति प्रकृतिग्रहणे शब्दार्थात् परो यो णिनिस्तदन्ते उत्तरपदे आद्युदात्तं स्यात्। इत्यर्थो विज्ञायेत तथा च यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात्परो णिनिस्तत्रापि स्यात्। "कृद्ग्रहणे गतिकारकपूर्वपदस्यापि ग्रहणम्" इति परिभाषया णिन्नन्तोत्तरपदत्वाऽनपायात्। प्रकृति ग्रहणे तु न भवति। योत्र धातुर्नासौ शब्दार्थः यश्च शब्दार्थो धातूपसर्गसमुदायो न ततो णिनिर्विहितः इति भावः।

५—यद्योभावप्रसन्धानमुकारादिपरं पदम्।
स्वरान्तं तादृशं विद्यात् यदन्यत् व्यक्तमूष्मणः॥

व्याख्या—यदीति-उकार आदिर्यस्य तत्पदं परं यत्र तत्र यद्योभावप्रसन्धानं संहिततयौत्वपरिज्ञानं तत्र तादृशपदमोभावान्तं विद्याज्जानीयात्। त्वोतः। प्रेतेत्युदाहरणम्। तत्राद्ये विसर्गान्तं स्वरान्तम्। अन्त्ये ओकारान्तं तत्।

ननु एवं तर्हि ऊष्मनिष्पन्नस्यापि तादृशतत्त्वापत्तिरिति चेत्तत्राह—यदिति। ऊष्मणो व्यक्तं निष्पन्नं यत्स्वरान्तं ततोऽन्यत्, तत्तु न तथेति भावः।

६—विवृत्तिः—विवेकेन पृथग्भावेन वर्तते इति विवृत्तिः। तथा च नारदः—

"विवृत्तयश्चतस्रो वै विज्ञेया इति मे मतम्।
अक्षराणि नियोगेन तासां नामानि मे शृणु।
ह्रस्वादिर्वत्साऽनुसृता वत्साऽनुसारिणी चाग्रे।
पाकवत्युभयोर्ह्रस्वा दीर्घवृत्ता पिपीलिका"। इति॥

अयोगवाहाश्च—वाहयन्ति निर्वाहयन्ति कार्यमिति वाहाः, अविद्यमानो योगो वर्णसमाम्नायेषु पाठो येषान्तेऽयोगास्ते च ते वाहा अयोगवाहा अनुस्वारविसर्गजिह्वामूलीयोपध्मानीया इति।

रङ्गः—रज्यतेऽनेन पूर्वो वर्ण इति रङ्गः। वर्णविशेषः। नकारस्य रुत्वे जाते योऽनुनासिको विधीयते स रङ्गः।

श्वासी—श्वासप्रयत्नवान् इत्यर्थः।

नादी—नादप्रयत्नवान् इत्यर्थः।

१९३५

सूचना—सूत्रनिर्देशप्रसङ्गे समस्तसूत्रोल्लेखनमावश्यकम्।

१—क्षेत्रस्य पतिना। आध्वं नो देवाः। अद्यायुः। वायवे पिबध्यै। समुद्रिया अप्सरसः। तं प्रत्नथा। एष स्य भानुः। रारन्धि। दक्षिणतः शये। सोषुणः।
एषां मध्ये सप्तसु प्रयोगेषु यानि वैदिकप्रक्रियाकार्याणि तानि शास्त्र निर्देशपुरस्सरं प्रदर्शनीयानि। १६

२—प्रकृत्यान्तः पादमव्यपरे। ईषान्तस्य हयादेरादिर्वा। क्वि क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्।
एषामर्था उदाहरणानि च लेख्यानि। ८

३—हिंसन्ति। मह्यम्। कल्याणः। आग्नेयः। त्रिभिष्ट्वं। आम्रपक्कः। आर्यब्राह्मणः। उग्रक्रोशी। उपकूलम्। प्रत्यंशुः। एषां मध्ये सप्तसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः, स्वरचिह्नानि च प्रदर्शनीयानि। १४

४—"द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ" इति सूत्रेऽकृतसमासान्तस्य मूर्धशब्दस्य ग्रहणे प्रयोजनं प्रतिपाद्य फिट्सूत्राणां पाणिनीयैरुपादेयत्वं समर्थनीयम्। ५

५—यमस्वरूपं सुस्पष्टं प्रतिपाद्यताम्। ४

६—अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधाऽनुप्रदानतः।
अस्पृष्टादिस्वरूपप्रतिपादनपुरस्सरमस्य व्याख्या कार्या। ५

## प्रश्नोत्तराणि—

१—क्षेत्रस्य पतिना—अत्र प्रयोगे समासाऽभावादप्राप्तघिसञ्ज्ञकार्या "षष्ठीयुक्तश्छन्दसि वा" इति सूत्रेण वैकल्पिकघिसञ्ज्ञायाम् "आङो ना-

ऽस्त्रियाम्" इति सूत्रेण आङो नादेशे पतिना इति। एवञ्च "क्षेत्रस्य पतिना" इति भवति ।

त्र्यध्वं नो देवाः—१० पृष्ठे द्रष्टव्यम् ।

अघायुः—परस्याघमिच्छतीत्यर्थे क्यचि प्रत्ययेऽनुबन्धलोपे "अश्वाघस्यात्" इति सूत्रेणादादेशे 'अघाय' इति जाते तस्मात् "क्याच्छन्दसि" इति सूत्रेण 'उ' प्रत्ययेऽकारस्य लोपे अघायु इत्यस्य प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'अघायुः' इति भवति ।

वायवे पिबध्यै—पाधातोः तुमर्थे "तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः" इति सूत्रेण शध्यैन् प्रत्ययेऽनुबन्धलोपे सार्वधातुकत्वे शपि "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" इति सूत्रेण पिबादेशे 'पिबध्यै' इति भवति ।

समुद्रिया अप्सरसः—समुन्दतीति समुद्रः "स्फायितञ्चीति" रगागमे निष्पन्नसमुद्रशब्दात् "समुद्राभ्राद्घः" इति सूत्रेण घप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण घस्य इयादेशेऽकारस्य लोपे विभक्तिकार्ये "समुद्रिया" इति भवति ।

तं प्रत्नथा—प्रत्नशब्दात् "प्रत्नपूर्वविश्वेमात्थाल् छन्दसि" इति सूत्रेण थाल्प्रत्ययेऽनुबन्धलोपे अव्ययत्वे सुपो लुकि 'प्रत्नथा' इति भवति ।

एष स्य भानुः—अत्र "स्यश्छन्दसि बहुलम्" इति सूत्रेण स्योत्तरसु इत्यस्य लोपे एषस्य भानुः इति भवति ।

रारन्धि—रम्धातोर्लेटि रमेर्व्यत्ययेन परस्मैपदे सिपि तस्य हौ "अङितश्च" इति सूत्रेण हेर्धि आदेशे शपि शपः श्लौ अभ्यासत्वे हलादिःशेषेऽभ्यासदीर्घे "रारन्धि" अत्र "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इति सूत्रेण मलोपस्तु न हेरङित्वात् ।

दक्षिणतः शये—अत्र प्रयोगांशे शेते इत्यत्र "लोपस्त आत्मनेपदेषु" इति सूत्रेण तलोपेऽयादेशे 'शये' इति भवति ।

मोषुणः—अत्र प्रयोगे अस्मदादेशस्य नसित्यस्यनकारस्य "नश्च धातुस्थोरुषुभ्यः" इति सूत्रेण णकारे सकारस्य रुत्वे विसर्गे मो षु णः इति सिद्धम्।

२—प्रकृत्यान्तः पादमव्यपरे–२० पृष्ठे द्रष्टव्यम् ।

ईषान्तस्य हयादेरादिर्वा । ईषान्तस्य हलादेरादिरुदात्तो वा स्यात् । इत्यर्थः । हलीषा । लाङ्गलीषा । इत्युदाहरणम् ।

किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्—क्रियाप्रश्ने वर्तमानेन किंशब्देन युक्तं तिङन्तं नाऽनुदात्तं स्यात्। इत्यर्थः। किं द्विजः पचत्याहोस्विद्गच्छति । इत्युदाहरणम् ।

३—हिंसन्ति—३० पृष्ठे द्रष्टव्यम् ।

मह्यम्—अत्र प्रयोगे "ङयि च" इति सूत्रेणाद्युदात्ते "मह्यम्" इति ।

कल्याणः—अत्र प्रयोगे "लघावन्ते द्वयोश्च वह्वषो गुरुः" इति सूत्रेण पर्यायेणाऽऽदिमध्यावुदात्तौ ततश्च 'कल्याणः' 'कल्याणः' इति भवति ।

आग्नेयः—३१ पृष्ठे द्रष्टव्यम् ।

त्रिष्टुभ्—३० पृष्ठे द्रष्टव्यम ।

आम्रपक्वः—ष्ट्रन्नन्तमाम्रशब्दः नित्यत्वादाद्युदात्तः ततश्च समासे "समासस्य" इति सूत्रेणाऽन्तोदात्ते प्राप्ते तम्प्रबाध्य "सप्तमी सिद्धशुष्कपक्ववन्धेष्वकालात्" इति सूत्रेण प्रकृतिभावे 'आम्रपक्वः' इति भवति ।

आर्यब्राह्मणः—आर्यशब्दस्य ण्यदन्तत्वात् "तित्स्वरितम्" इति सूत्रेणाऽन्तोदात्ते आर्यश्चासौ ब्राह्मणः इति कर्मधारयसमासे "समासस्य" इति सूत्रेणाऽन्तोदात्ते प्राप्ते ब्राह्मणकुमारयोरुत्तरपदयोर्ण्यः पूर्वपदं प्रकृतिस्वरं वा स्यात् कर्मधारये इत्यर्थक–"आर्यो ब्राह्मणकुमारयोः" इति सूत्रेण प्रकृतिस्वरे "आर्यब्राह्मणः" पक्षे आर्यब्राह्मणः इति भवति ।

उष्ट्रक्रोशी—अत्र प्रयोगे "उपमानं शब्दार्थप्रकृतावेव" इति सूत्रेण क्रोशीति णिन्यन्ते उत्तरपदे परे उपमानवाचिनः पूर्वपदस्योष्ट्र इत्यस्याऽऽद्युदात्ते 'उष्ट्रक्रोशी' इति भवति ।

उपकूलम्—उपकूलमित्यत्राव्ययीभावसमासानन्तरं "कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे" इति सूत्रेणोत्तरपदस्याऽन्तोदात्तत्वे "उपकूलम्" इति भवति ।

प्रत्यंशुः—प्रतिगतः अंशुरिति 'प्रत्यंशुः' अत्र प्रयोगे "प्रतेरंश्वादयस्त-

त्पुरुषे" इति सूत्रेण अंशु इत्यस्याऽन्तोदात्तत्वे 'प्रत्यंशुः' इति भवति ।

४—द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ—अत्र "मूर्धन्" इत्यकृतसमासान्तः एव मूर्धशब्दः । किमर्थमेतादृशमिति, तस्यैतत्प्रयोजनमसत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात् । एतदेवज्ञापकमनित्यः समासान्तो भवतीति पृथक्कृतसमासान्तस्योपादानम्, तर्हि यदा समासान्तः क्रियते तदा न प्राप्नोति, कुतः ? शब्दान्तरत्वात् । बहुव्रीहिकार्यत्वात्, तस्य बहुव्रीहिरेकादेशः समासान्तस्तस्य भावस्तस्मात् । तदेवं बहुव्रीहिकार्यत्वात्तदेकदेशित्वेनाऽऽश्रयणात् समासान्तस्येति यदा समासान्तः क्रियते तदापि विधिरयं भवत्येवेति शम् ।

फिटसूत्राणां पाणिनीयैरुपादेयत्वमिति—ननु कथमपाणिनीयानि सूत्राण्युपन्यस्यन्ते, पाणिनीयसूत्रैर्यः स्वरः आयाति स एव प्रमाणम् । तथा च "शताच्च ठन्यतावशते" इति सूत्रे कैयटः नियतकालाश्च स्मृतयो व्यवस्थाहेतवः इति मुनित्रयमतेनाऽयत्वे साध्वसाधुप्रविभागः, इति नैतत् "अपाणिनीयान्यपि फिट्सूत्राणि पाणिनीयैराश्रियन्ते" भाष्याज्ज्ञापकात् ।

तथा च "आद्युदात्तश्च" इति सूत्रे भाष्यं प्रातिपदिकस्य चान्त इति प्रकृतेरन्तोदात्तत्वं शास्तीति । तथा तस्मिन्नेव सूत्रे 'प्रत्ययाद्युदात्तत्वस्याऽवकाशः, यत्राऽनुदात्ता प्रकृतिः 'समत्वम् सिमत्वमि'ति । नहि "फिषोऽन्त उदात्तः" "त्वत्वसमसिमे"त्यादि फिट्सूत्राश्रयणं विना प्रकृतेरन्तोदात्तत्वं सर्वोऽनुदात्तत्वञ्च सम्भवतीति दिक् ।

५—"कुं खुं गुं घुं" एते चत्वारो यमाः । ननु वर्गेषु आदितश्चतुर्णां पञ्चमे परे तन्मध्ये पूर्ववर्णसमानाकारं वर्णान्तरं यमसञ्ज्ञमिति प्रातिशाख्याद् वर्गपञ्चमयुक्ताः । प्रथमादयो यमा इति विवरणात् ।

"अनन्त्यश्च भवेत्पूर्वो ह्यन्तश्च परतो यदि ।
तत्र मध्ये यमस्तिष्ठेत् सवर्णः पूर्ववर्णयोः"

इति नारदीयशिक्षावचनात् अनन्त्यान्तसंयोगे मध्ये यमः पूर्वस्य गुण इति ऋक्तन्त्रव्याकरणप्रणेतृवचनाच्च यमानां विंशतित्वमायातं ततश्चत्वार इत्यसङ्गतम् । न च "कुं खुं गुं घुं यमाः" इति न्यासग्रन्थेन तेषां चतुष्टयत्वं शङ्क्यम् । "कचटतपाः कुः खछठथफाः खुः इत्यादि परिभाषया तावताऽपि तेषां विंशतित्वलाभादिति चेन्न । प्रथमयमद्वितीययमादिभेदेन तेषां विभाजने संख्याचतुष्टयत्वलाभात् ।

६—अचोऽस्पृष्टा यणास्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधाऽनुप्रदानतः ॥

अचोऽस्पृष्टेति—अचः स्वराः, अस्पृष्टाः स्पर्शाऽभावरूपविवृतप्रयत्नवन्त इत्यर्थः । यण इति । ईषत्पदार्थस्य स्पृष्टास्पृष्टयोरन्वयात् । यरलवानामीषत्स्पृष्टत्वमीषद्विवृतत्वञ्चेति नागेशः । वस्तुतस्तु ईषदित्यत्रास्पृष्टेत्यस्यैकदेशस्पृष्टपदानुवृत्त्या यणामीषत्स्पृष्टत्वमेव । अत एव "ईषत् स्पृष्टास्तथान्तःस्थाः" इति याज्ञवल्क्यशिक्षा, "अन्तःस्था ईषदुत्स्पृशः" इत्यमरेश शिक्षा च सङ्गच्छेते । नेमस्पृष्टा इति । नेम इत्यर्द्धे, शलः शषसहाः अर्द्धस्पृष्टा इत्यर्थः । शेषाः हलः कादयोमावसानाः स्पृष्टाः स्पृष्टप्रयत्नवन्तः । तथा च षड्विधमास्यप्रयत्नमुपक्रम्य याज्ञवल्क्यः—

"अकारः संवृतो ज्ञेय इतरे विवृताः स्वराः ।
सर्वे च ते स्युरस्पृष्टाः स्पर्शाः स्पृष्टा भवन्ति हि ॥
ईषत्स्पृष्टास्तथान्तःस्था ऊष्माणोऽर्द्धस्पृशः स्वराः ।
सामान्यं भजते वर्णः स्वस्थानकरणस्य हि" ॥

अत्राकारस्य संवृतत्वं ।

"संवृतं मातृकं ज्ञेयं विवृतं तु द्विमातृकम्" इत्यत्रोक्तम् । स्वरतः कालतः इत्यत्रोद्दिष्टं पञ्चमं भेदं दर्शयितुमाह—निबोधेति ! अनुप्रदानतः इत्यत्र पञ्चम्यन्तात्तसिः । अनुप्रदानं बाह्यप्रयत्नस्तस्माद्वर्णानां भेदं निबोध जानीहीत्यर्थः । [ शलः स्मृताः इत्यत्र 'शरस्तथा' इति क्वचित् पाठो दृश्यते ]

१६३६

सूचना—सूत्रनिर्देशप्रसङ्गे समस्तसूत्रोल्लेखनमावश्यकम् ।

१—नैनं हिन्वन्त्यपि वाजिनेषु । आ प्रा द्यावा पृथिवी । दधिक्राः । मरुते पतिः । प्रभ्वी । वेशोभगीनः । सुमङ्गलीः । पूषा अविष्टु । नूमर्तः । गत्वाय । प्रमिणन्ति व्रतानि ।
एषां मध्ये सप्तसु प्रयोगेषु वैदिकप्रक्रियाकार्याणि शास्त्रनिदर्शपुरस्सरं प्रदर्शनीयानि । १४

२—अनसन्तान्नपुंसकाच्छन्दसि । स्वाङ्गशिटामदन्तानाम् । गोत्रान्ते वासिमाणवब्राह्मणेषु क्षेपे । स्वरितो वाऽनुदात्ते पदादौ ।

एषामर्थाः उदाहरणानि च लेख्यानि । ८

३—देवीम् । शरावती । पल्लम् । नेत्री । पाणिनीयरौढीयाः । ब्रह्मनगरम् । प्रधौतपादः । पर्यन्तः ।

एषां मध्ये पञ्चसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषा प्रतिपादनीयाः, स्वरचिह्नानि च प्रदर्शनीयानि । १०

४—(क) "अग्निमीळे पुरोहितम्" इत्यस्मिन् पादे स्वरचिह्नैः सह स्वरसञ्चारप्रकारः प्रदर्शनीयः । ३

(ख) "गतिकारकोपपदात् कृत्" अत्र कृद्ग्रहणप्रयोजनं सुस्पष्टं प्रतिपादनीयम् । ५

५—मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
सवाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥
सुस्पष्टं व्याख्यायतां स्वशब्दैः । ५

६—"अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" । सुविशदमेतद् व्याख्याय अयोगवाहाः के ? कथञ्च तेषामयोगवाहत्वमिति निरूपणीयम् । ५

## प्रश्नोत्तराणि—

१—नैनं हिन्वन्त्यपि वाजिनेषु—१४ पृष्ठे द्रष्टव्यम् ।

आ प्रा द्यावा पृथिवी—आङ् पूर्वकप्राधातोर्लुङि सिपिच्लौ "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति सूत्रेण च्लेर्लुकि "इतश्च" इतीकारस्य लोपे रुत्वे यत्वे यलोपे 'आ प्रा द्यावापृथिवी' इति सिद्धम् ।

दधिक्राः—दधि क्रामति दधिक्राः इत्यत्र "जनसनखनक्रमगमोविट्" इति विटि सर्वापहारे "विड्वनोरनुनासिकस्यात्" इति सूत्रेणादादेशे सौ रुत्वे विसर्गे 'दधिक्राः' इति भवति ।

मरते पतिः—अत्र मृङ् धातोर्लटि ते "तुदादिभ्यः शः" इति प्राप्ते "व्यत्ययो बहुलम्" इति व्यत्ययेन शपि अनुबन्धलोपे गुणे रपरे "टित आत्मनेपदानां टेरे" इत्येत्वे 'मरते' इति सिद्धम् । लोके तु शप्रत्यये सति "रिङ्शयग्लिङ्क्षु" इति रिङादेशे इयङि 'म्रियते' इति ।

प्रभ्वी—प्रभुशब्दात् "भुवश्च" इति सूत्रेण ङीषि अनुबन्धलोपे यणादेशे सौ

सुलोपे 'प्रभ्वी' इति सिद्धम् ।

वेशोभगीनः—वेशो बलं तदेव भगः इति वेशोभग्यः, वेशोभगीनः इति इत्यत्र "वेशोयशआदेर्भगाद्यल्खौ" इति सूत्रेण खप्रत्यये 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण खस्य ईनादेशेऽकारस्य लोपे सौ रुत्वे विसर्गे 'वेशोभगीनः' इति सिद्धम् । यत् प्रत्यये सति अकारस्य लोपे 'वेशोभग्यः' इति भवति ।

सुमङ्गलीः—४२ पृष्ठे द्रष्टव्यम् ।

पूषा अविष्टु । अत्र प्रयोगे दीर्घे प्राप्ते "ईषा अक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः" इत्यनेन प्रकृतिभावे 'पूषा अविष्टु' इति भवति ।

नू मर्तः—६ पृष्ठे द्रष्टव्यम् ।

गत्वाय—१९ पृष्ठे द्रष्टव्यम् ।

प्रमिणन्ति व्रतानि—मीनातेर्लेटि झिप्रत्यये परे "हिनुमीना" इति णत्वे 'मीनातेर्निगमे' इति सूत्रेण ह्रस्वे "प्रमिणन्ति" इति सिद्धम् । लोके तु 'प्रमीणन्ति' इति भवति ।

२—अनसन्तान्नपुंसकाच्छन्दसि—तत्पुरुषाट्टच् स्यात् समासान्तः इत्यर्थः । 'ब्रह्मसामं भवति" 'देवच्छन्दसानि' इत्युदाहरणम् ।

स्वाङ्गशिटामदन्तानाम्—४२ पृष्ठे द्रष्टव्यम् ।

गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे—गोत्रवाचिनि, अन्तेवासिनि चोत्तरपदे माणवब्राह्मणयोश्च क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् इत्यर्थः । भार्यासौश्रुतः । कुमारीदाक्षाः । ओदनपाणिनीयाः । भिक्षामाणवः । भयब्राह्मणः । इत्युदाहरणानि ।

स्वरितो वाऽनुदात्ते पदादौ—३३ पृष्ठे द्रष्टव्यम् ।

३—देवीम्—३ पृष्ठे द्रष्टव्यम् । शरावती—२ पृष्ठे द्रष्टव्यम् ।

पललम्—अत्र प्रयोगे "हयादीनामसंयुक्तलान्तानामन्तः" इति सूत्रेणाऽद्युदात्ते "पललम्" इति अनेनैव अन्त्यात्पूर्वस्योदात्तत्वे 'पललम्' इति भवति ।

नेत्री—तृजन्तत्वात् "चितः" इति सूत्रेणान्तोदाते "उदात्तयणो हल्पूर्वात्" इति सूत्रेणोदात्तत्वे 'नेत्री' इति भवति ।

पाणिनीयरौढीयाः—पाणिनेः रौढेश्च छात्रा इति पाणिनीयाः रौढीयाः। पा-

णिनीयाश्च रौढीयाश्च इति पाणिनीयरौढीयाः अत्र पाणिनिरौढिशब्दाभ्यां "वृद्धाच्छः" इति सूत्रेण छप्रत्यये "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति सूत्रेण छस्येयादेशे इकारस्य लोपे छस्वरेण मध्योदात्तयोः पाणिनीयाश्च रौढीयाश्चेति द्वन्द्वसमासे "समासस्य" इति सूत्रेणाऽन्तोदात्ते प्राप्ते "आचार्योपसर्जनश्चान्तेवासिनि" इति सूत्रेण पूर्वपदप्रकृतिभावे 'पाणिनीयरौढीयाः' इति भवति। अत्र रौढिशब्दात् "इञश्च" इत्यण्न "न द्व्यचः प्राच्यभरतेषु" इति तन्निषेधात्।

ब्रह्मनगरम्—अत्र प्रयोगे "अमहन्नवं नगरेऽनुदीचाम्" इति सूत्रेण नगरे परे पूर्वस्याऽऽद्युदात्ते 'ब्रह्मनगरम्' इति भवति।

प्रधौतपादः—गतिशुद्ध्यर्थक-उकारेत्संज्ञकप्रपूर्वकधाव्-धातोः निष्ठाक्तप्रत्ययेऽनुबन्धलोपे "छ्वोः शूडनुनासिके च" इति सूत्रेणोठि "एत्येधत्यूठ्सु" इति सूत्रेण वृद्धौ प्रधौतशब्दस्य गतिस्वरेणाऽऽद्युदात्ते प्रधौतपाद इत्यत्र "निष्ठोपसर्गपूर्वमन्यतरस्याम्" इति सूत्रेण निष्ठान्तपूर्वपदस्याऽन्तोदात्तत्वे "प्रधौतपादः" इति अन्तोदात्ताऽभावपक्षे "प्रधौतपादः" इति भवति।

पर्यन्तः-अत्र प्रयोगे "अन्तः" इति सूत्रेणऽन्तोदात्ते 'पर्यन्तः' इति भवति।

४—(क) अग्निमीळे पुरोहितम्—तत्र च माधवमते 'फिषोन्त उदात्तः" इति सूत्रेणाव्युत्पत्तिपक्षेऽन्तोदात्तः। वस्तुतस्तु 'घृतादीनाञ्च" इति सूत्रेण घृतादित्वादन्तोदात्तः। व्युत्पत्तिपक्षे तु "ञ्नित्यादिर्नित्यम्" इति निप्रत्ययस्वरेणाऽऽद्युदात्तः। अम् सुप्त्वात् "सुप्पितौ अनुदात्तौ" इति सूत्रेणाऽनुदात्तः "अमि पूर्वः" इत्येकादेशात्तु "एकादेश उदात्तेनोदात्तः" इति सूत्रेणोदात्तः। अग्निशब्दात् परे तिङन्तस्य ईळे शब्दस्य "तिङ्ङतिङः" इत्यनेन निघातः। 'ईड'स्तुतौ धातोः लडुत्तमैकवचनस्य, इ+ट इट्—टेरेत्वम् द्वयोश्चास्य स्वरयोः इत्यादिना प्रातिशाख्येन डस्य ळत्वम्। सत्यपि धातुत्वाद्युदात्तत्वे संहिताविवक्षायां निघाते संहितायान्तु "उदात्तादनुदात्तस्य स्वरितः" इत्यनेनेकारः स्वरितः। "स्वरितात्संहितायाम्" इति 'ळे' इत्यस्य प्रचयाऽपरपर्यायो एकश्रुतिः।

पुरः शब्दोऽन्तोदात्तः "पूर्वाधरावराणाम्" इत्यसि प्रत्ययस्वरात्। हित शब्दोपि धाञो निष्ठायां "दधातेर्हिः" इति सूत्रेण ह्यादेशे प्रत्ययस्वरेणाऽन्तो-

दात्तः । "पुरोऽव्ययम्" इति गतिसंज्ञायां "कुगति च" इति समासे समासोऽन्तोदात्ते "तत्पुरुषे तुल्यार्थ" इत्यव्ययपूर्वपदप्रकृतिस्वरे, थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते "गतिरनन्तरः" इति पूर्वपदप्रकृतिस्वरः । पुरःशब्दस्योकारस्य संहितायां प्रचये प्राप्ते "उदात्तस्वरितपरस्य सन्नतरः" इत्यनुदात्ततरः इति शम्।

४—(ख) गतिकारकोपपदात्कृत्—अत्र कृद्ग्रहणप्रयोजनम् ३५ पृष्ठे द्रष्टव्यम् ।

५—मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

व्याख्या—मन्त्रग्रहणं साधुशब्दमात्रोपलक्षणम्, अत एव 'दुष्टः शब्दः' इति भाष्योक्तं पाठान्तरं सङ्गच्छते । इन्द्रेण ज्येष्ठपुत्रे हते कुपितस्त्वष्टा इन्द्रविघातपुत्रजननेच्छया यज्ञमारब्धवान्, तत्र चेन्द्रशत्रुर्वर्द्धस्वेति मन्त्र ऊहित इन्द्रस्य शमयिता घातयिता वेति इन्द्रशत्रुशब्दार्थो विवक्षितस्तत्र तत्पुरुषप्रयुक्तोऽन्तोदात्तत्वे कर्तव्ये बहुव्रीहिमाश्रित्य ऋत्विग्भिः पूर्वपदप्रकृतिस्वरो विहितस्तत इन्द्र एव वृत्रस्य शमयिता जात इति प्रसिद्धिः । स्वरतो वर्णत इत्यत्र "हीयमानपापयोगाच्च" इति तृतीयान्तात्तसिः । स्वरवर्णाभ्यां रहितो मन्त्रो मिथ्याप्रयुक्तो विवक्षितार्थासाधकत्वात्स विवक्षितमर्थं न कथयति । वागेव वज्रः इति वाग्वज्रो हिंसकत्वात् यजमानं हिनस्ति नाशयति । फलाऽनिवृत्तिरनिष्टाऽवाप्तिश्चात्र नाशः । तत्र दृष्टान्तमाह—यथेति । स्वरतः इत्यत्र षष्ठ्यन्तादाद्यादित्वात्तसिः । तथाच नारदः—

"प्रहीणः स्वरवर्णाभ्यां यो वै मन्त्रः प्रयुज्यते ।
यज्ञेषु यजमानस्य रुषत्यायुः प्रजां पशून्" ॥ इति ।

ननु ऋत्विगपराधे सति यजमानेऽनिष्टपातः कथमिति चेत्सत्यम् । तदनुष्ठापितयागजन्यस्वर्गादिफलभागित्वं यजमानस्यैवेति तद्विहितापराधस्यापि तद्भागित्वात् । ऋत्विजां दक्षिणामात्रभागित्वादिति शम् ।

६—अयोगवाहा विज्ञेया आश्रयस्थानभागिनः—

अयोगवाहाः विसर्गादयः यद्वर्णाश्रितास्तेषां यत्स्थानं तदयोगवाहानामपि संबोध्यम् नत्वेतेषां स्वतन्त्रं स्थानम्। वाहयन्ति निर्वाहयन्ति कार्यमिति वाहाः अविद्यमानो योगो वर्णसमाम्नायेषु पाठो येषां तेऽयोगास्ते च ते वाहाः इत्ययोगवाहाः विसर्गादयः आश्रयस्थानभागिनः इति ।

अयोगवाहाश्च अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयाः। अत्रत्य विषयाः पूर्वमपि निरूपिताः।

१८३७

सूचना—सूत्रनिर्देशप्रसङ्गे समस्तसूत्रोल्लेखनमावश्यकम्।

१—गामस्य तदहः सभायां दीव्येयुः। शुन्धध्वं दैव्याय कर्मणे देवयज्यायै। अद्य ममार। दातवा उ। सप्तदशात्तरश्छान्दस्यः। दाधार यः पृथिवीम्। अयं सो अध्वरः। सुश्चन्द्र दस्म। नाभा पृथिव्याः। गृष्टिः ससूव स्थविरम्। त्रिनिष्ठं देव सवितः।
एषां मध्ये सप्तसु प्रयोगेषु वैदिकप्रक्रियाकार्याणि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि। १४

२—मतुवसो रु सम्बुद्धौ छन्दसि। नञ्विषयस्याऽनिसन्तस्य। आचार्योपसर्जनश्चान्तेवासिनि। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य।
एषामर्था उदाहरणानि च लेख्यानि। १०

३—चिकीर्षकः। केकयः। दातवै। अक्षण्वन्तः। मद्रश्ववेशम्। पुरोहितम्। उद्दालकपुष्पभञ्जिका। विश्वकर्मा।
एषां मध्ये पञ्चसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनायाः, स्वरचिह्नानि च प्रदर्शनीयानि। १०

४—(क) "शृणोत ग्रावाणः" इत्यत्र "ऋचि तुनुघ" इत्यनेन दीर्घत्ववारणप्रकारः प्रदर्शनीयः। ३

४—(ख) "पूजनात्पूजितमनुदात्तम् काष्ठादिभ्यः" अत्र पूजितग्रहण प्रयोजनं प्रतिपादनीयम्। ३

५—त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा।
सुस्पष्टमेतद् व्याख्याय वर्णानां त्रिषष्टित्वं चतुःषष्टित्वं च कथमिति सप्रपञ्चं निरूपणीयम्। ५

६—ऊष्मणोऽष्टविधा गतयः सोदाहरणं निरूपणीयाः। ५

## प्रश्नोत्तराणि—

**१—गामस्य तदहः सभायां दीव्येयुः**—अत्र "दिवस्तदर्थस्य" इति सूत्रेण प्राप्तषष्ठीम्बाधित्वा "द्वितीया ब्राह्मणे" इति द्वितीया विभक्तौ 'गामस्य तदहः सभायां दीव्येयुः' इति भवति ।

**शुन्धध्वं दैव्याय कर्मणे देवयज्यायै**—देवशब्दे उपपदे यज्धातोः "छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्य देवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि" इति सूत्रे देवयज्येति निपातनात् यप्रत्यये टापि सौ सुलोपे 'देवयज्या' इति सिद्धम् । स्त्रीलिङ्गे एवेदं निपातनमिति बोध्यम् ।

**अद्य ममार**—३७ पृष्ठे द्रष्टव्यम् ।

**दातवा उ**—३३ पृष्ठे द्रष्टव्यम् ।

**सप्तदशाक्षरश्छन्दस्यः**—इत्यत्र "अक्षर समूहे छन्दस उपसङ्ख्यानम्" इति छन्दःशब्दात् यत् प्रत्यये सौ रुत्वे विसर्गे "सप्तदशाक्षरश्छन्दस्य" इति भवति ।

**दाधार यः पृथिवीम्**—अत्र धृधातोर्लिटि तिपि णलि द्वित्वेऽभ्यासकार्ये वृद्धौ रपरे 'दधार' इति जाते "तुजादीनां दीर्घोऽभ्यासस्य" इति सूत्रेणाऽभ्यासदीर्घे "दाधार" इति भवति ।

**अयं सो अध्वरः**—अत्र पूर्वरूपे प्राप्ते "अनुदात्ते च कुधपरे" इति सूत्रेण प्रकृतिभावे "अयं सो अध्वरः" इति भवति ।

**सुश्चन्द्र दस्म**—सु × चन्द्र इति स्थिते "ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे" इति सूत्रेण ह्रस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमे उटावितौ "स्तोः श्चुना श्चुः" इति श्चुत्वे 'सुश्चन्द्र दस्म' इति भवति ।

**नाभा पृथिव्याः**—नाभि शब्दात् ङिविभक्तौ "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः" इति सूत्रेण ङिस्थाने डाऽऽदेशेऽनुबन्धलोपे डित्वाट्टिलोपे "नाभा" इति सिद्धम् । लोके 'सुपां सुलुक्' इति सूत्रस्य प्रवृत्त्यभावात् 'नाभौ' इति भवति ।

**गृष्टिः ससूव स्थविरम्**—सुतेर्लिटि "ससूवेति निगमे" इति सूत्रे 'ससूव' इति पाठात् निपातनात् परस्मैपदे तिपि तस्य णलादेशेऽनुबन्धलोपे द्वित्वे

अभ्यासत्वे निपातनादेव वुगागमेऽभ्यासस्याऽत्वे 'ससूव' इति भवति। लोके तु 'सुषुवे' इति भवति।

त्रिभिष्ट्वं देव सवितः—एतत्वाक्यघटकत्रिभिष्ट्वमित्यत्र त्रिभिः त्वम् इति आसीत् तत्र सत्वे "युष्मत्तत्ततक्षुष्वन्तः पादम्" इति सूत्रेण सस्य षत्वे "ष्टुना ष्टुः" इति सूत्रेण ष्टुत्वे 'त्रिभिष्ट्वं देवसवितः' इति भवति।

२—मतुवसो रु सम्बुद्धौ छन्दसि-मत्वन्तस्य वस्वन्तस्य च रुः स्यात् इत्यर्थः। इन्द्र मरुत्व इह पाहि सोमम्। हरिवो मेदिनं त्वा। इत्युदाहरणे।

नञ्चिप्रत्ययस्याऽनिसन्तस्य—३४ पृष्ठे द्रष्टव्यम्।

उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य—३० पृष्ठे द्रष्टव्यम्।

आचार्योपसर्जनश्चान्तेवासिनि--३९ पृष्ठे द्रष्टव्यम्।

चिकीर्षकः—३४ पृष्ठे द्रष्टव्यम्।

केकयः—अत्र "जनपदशब्दानामषान्तानाम्" इत्यनेनाऽऽद्युदात्ते 'केकयः' इति भवति।

दातवै—दाधातोः "कृत्यार्थे तवैकेन्केन्यत्वनः" इति सूत्रेण तवैप्रत्यये अन्तश्च तवै युगपत्" इति सूत्रेण तवैप्रत्ययान्तस्याद्यन्तयोर्युगपदाद्युदात्तयोः कृतयोः 'दातवै' इति सिद्धम्। दातवै इत्यस्य दातव्यमित्यर्थः।

अक्षण्वन्तः—अक्षिशब्दान्मतुपि 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति "छन्दस्यपि दृश्यते" इत्यनङि ङकारस्येत्सञ्ज्ञायां लोपे च "अनो नुट्" इत्यस्याऽसिद्धत्वात्पूर्वं नलोपे ततो भूतपूर्वगत्या मतुपो नुटि उटावितौ "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मकारस्य वत्वे णत्वे "ह्रस्वनुड्भ्यां मतुप्" इति सूत्रेण नुटः परस्य मतुपः उदात्ते 'अक्षण्वन्त' इति भवति।

मद्रसवेशम्—मद्रस्य सवेशमिति षष्ठीसमासे "समासस्य" इति सूत्रेणाऽन्तोदात्ते प्राप्ते तम्प्रबाध्य सामीप्यार्थेषु सविधादिषूत्तरपदेषु पूर्वपदं प्रकृत्यास्यात्तत्पुरुषे इत्यर्थक "सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये" इति सूत्रेण पूर्वपदप्रकृतिस्वरे 'मद्रसवेशम्' इति भवति।

पुरोहितम्—अत्र पुरः शब्दः 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इत्यसिप्रत्ययान्तत्वात् प्रत्ययस्वरेणाऽन्तोदात्तः हितशब्दोऽपि धाञो निष्ठायां "दधातेर्हिः" इति हयादेशे प्रत्ययस्वेरणाऽन्तोदात्तः। यद्यपि "पुरोऽव्ययम्" इति

गतिसञ्ज्ञायां "कुगति च" इति समासे समासान्तोदात्तः "तत्पुरुषे तुल्यार्थ"त्यव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते "गतिकारकोपपदात्कृत्" कृदुत्तरपदप्रकृतिस्वरे, थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते तथापि "गतिरनन्तरः" इति पूर्वपदप्रकृतिस्वरो भवति।

उद्दालकपुष्पभञ्जिका—अत्र "नित्यं क्रीडे"ति समासे "समासस्य" इति सूत्रेणाऽन्तोदात्ते प्राप्ते तम्प्रबाध्य प्राग्देशवाचिनां या क्रीडा तद्वाचिनि समासे ण्वुकप्रत्ययान्ते परे पूर्वमाद्युदात्तं स्यादित्यर्थक "प्राचां क्रीडायाम्" इति सूत्रेणाऽद्युदात्ते 'उद्दालकपुष्पभञ्जिका' इति भवति।

विश्वकर्मा—विशेः क्वन् नित्त्वादाद्युदात्ते ततश्च बहुव्रीहिसमासे सञ्ज्ञात्वात् "बहुव्रीहौ विश्वं सञ्ज्ञायाम्" इति सूत्रेण पूर्वपदभूतस्य विश्वशब्दस्याऽन्तोदात्तत्वे 'विश्वकर्मा' इति।

४—(क) "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" -अत्र सूत्रे तङिति थादेशस्य ङित्वपक्षे ग्रहणम् तेन "शृणोत ग्रावाणः" अत्र न दीर्घः। अत्र (शृणोत इत्यत्र) "तप्तनप्तनथनाश्च" इति तबादेशेन पित्वात् ङित्वं नास्ति।

४—(ख) पूजनात्पूजितमनुदात्तम् काष्ठादिभ्यः—पूजनस्य पूजिताऽपेक्षत्वात् पूजनादित्येव पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम्। एतदेव च ज्ञापकमत्र प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयते इति ज्ञापकफलञ्च "यद्वृत्तान्नित्यम्" इत्यस्योदाहरणे "यदग्ने वायुर्याति" इत्यत्र व्यवहिते "यद्वृत्तान्नित्यम्" इति सूत्रकृतकार्यम् भवति।

५—त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा॥ इति।

त्र्यधिका षष्टिस्त्रिषष्टिरेवं चतुःषष्टिर्वा वर्णा अक्षराणि सम्भवतो लोकवेदयोरेतेषामेव सम्भवात् प्रसिद्धत्वान्मता इष्टा इतोऽधिका वर्णा नेष्टा इत्यर्थः। ननु संस्कृतप्राकृतादिभेदाद् भाषाणां बाहुल्यात्तेष्वधिकवर्णोपलब्धिसम्भवात् कुत एवेत्यत आह—प्राकृत इति। प्राकृतिः संस्कृतं तत्र भवं प्राकृतम्। तदुक्तं हरिणा वाक्यपदीये ब्रह्मकाण्डे—

"पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः"॥

सर्वजनप्रसिद्धत्वात्प्राकृतस्य प्रथमोच्चारणमपि नाऽपभ्रंशादेः सङ्ग्रहः। तथाच शूरसेन्यादिप्राकृतसंस्कृतापभ्रंशादिषु सर्वत्रैत एव वर्णा उच्चार्यन्ते नाधिका इत्यर्थः। ननु नाधिका इति कुतो ज्ञातं त्वद्वचसि प्रमाणाऽभाव इति चेत्तत्राह—स्वयमिति। स्वयम्भुवा ब्राह्मणा स्वयमात्मनैव निर्दिष्टसङ्ख्याका एव वर्णाः प्रकर्षेणात्यादरेणोक्ताः कथिता अतो निरुक्तसङ्ख्यातो नाधिकास्ते इति भावः।

एकविंशतिः स्वराः तथाहि—अ इ उ ऋ इत्येते ह्रस्वदीर्घप्लुतभेदाद् द्वादश लृकारो ह्रस्व इत्येक एव एवं त्रयोदश जाताः ए ओ ऐ औ इत्येते दीर्घप्लुतभेदादष्टौ, एवं सङ्कलनया एकविंशतिः स्वराः 'कादयो मावसाना स्पर्शा' इत्येवं सङ्केतितानां स्पर्शानां पञ्चविंशतिः सङ्ख्या प्रसिद्धैव। यादयो यकारमारभ्य हकारपर्यन्ता अन्तःस्थोष्माण अष्टौ "कुं खुं गुं घुं" इति यमाश्चत्वार इत्येवं सङ्कलनया अष्टपञ्चाशत्सङ्ख्या सम्पन्ना। अनुस्वारः, विसर्गः, जिह्वामूलीयः, उपध्मानीयः, द्विः स्पृष्ट इति बहु ऋचानामेष प्रसिद्धः श्लेषो लेहेति एवं सङ्कलनया वर्णानां त्रिषष्टिः लृकारस्य प्लुतसम्भवात् तेन सह चतुःषष्टिर्वर्णाः इत्यवधेयम्।

६—ऊष्मणः—शषसहानां गतिः स्थितिरष्टधा सोदाहरणेति ओभाव इति यथा चन्द्रमोभ्यामित्यादौ सकारस्य कुत्रचिद्विवृतिः—

द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते।
विवृतिस्तत्र विज्ञेया यऽईशेति निदर्शनम्॥

इति याज्ञवल्क्योक्तलक्षणाः सोदाहरणाः। शषसा—विशौ, रत्नमुषौ, चन्द्रमसावित्यादयः। रेफः—सजूर्भ्याम्, इति। जिह्वामूलम्—प्रात ✕ करोति, भूय ✕ करोति इत्यादि। उपध्मा—प्रात ✕ पचति, भूय ✕ पचतीत्याद्यूह्यम्। ऊष्मणां गत्यष्टककथनं यस्य यत्सम्भवति तदभिप्रायेण न तु प्रत्येकं तेषां गत्यष्टकत्वम्।

१४३८

१—वृत्रं हनति वृत्रहा। अघायुः। पपिः सोमम्। याने अग्ने रक्षस्या तनूः। कथा दाशेम। अभ्र आँ अपः। श्रुधी गिरः। अधः स्विदासीत्। तमसस् पारमस्य। पितृयाणम्। पृतनासु साह्वा। एषां मध्ये सप्तसु प्रयोगेषु वैदिकप्रक्रियाकार्याणि शास्त्रनिर्देशपूर्वकं प्रदर्शनीयानि।

१४

२—बहुलं छन्दस्यमाङ्योगेऽपि। छन्दस्यनेकमपि साकाङ्क्षम्। तवै

चान्तश्च युगपत् । स्वाङ्गशिटामदन्तानाम् ।

एषामर्था उदाहरणानि च लेख्यानि । १०

३—शरावती । रुद्रहतः । आर्यब्राह्मणः । वृकोदरः । समपादः । दक्षिणः ( बाहुः ) आवसथः । उष्ट्रकोशी ।

एषां मध्ये पञ्चसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः स्वरचिह्नानि च प्रदर्शनीयानि । १०

४—गतिकारकोपपदात्कृत् इति सूत्रे कृद्ग्रहणप्रयोजनम् प्रतिपादनीयम् अथवा-निपातस्यचेत्यनेनैव त्वादीनां दीर्घत्वे ऋचितुनुघेत्यादिसूत्रे तेषां ग्रहणस्य वैयर्थ्यं निरस्यताम् । ६

५—अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रितौ इत्यादि सुस्पष्टमेतद्व्याख्याय दुःस्पृष्टशब्दार्थो निरूप्यताम् । ५

६—अयोगवाह । यम । रङ्ग । नादिन् । श्वासिन् ।

इत्येतेषां शब्दानामर्थाः सोदाहरणं स्पष्टीकर्तव्याः । ५

सूचना—सूत्रनिर्देशप्रसङ्गे समस्तसूत्रोल्लेखनमावश्यकम् ।

## प्रश्नोत्तराणि—

१—वृत्रं हनति वृत्रहा—३७ पृष्ठे द्रष्टव्यम् ।

अघायुः—४६ पृष्ठे द्रष्टव्यम् ।

पपिः सोमम्—'पा' धातोः "आदृगमहनजनः किकिनौ लिट् च" इति सूत्रेण किप्रत्ययेऽनुबन्धलोपे लिड्वदतिदेशेन द्वित्वादिकार्ये आल्लोपे सौ रुत्वे विसर्गे 'पपिः' इति भवति ।

या ते अग्ने रक्षस्या तनूः—हन्यतेऽनया हननी रक्षसां हननी रक्षस्येति विग्रहे "रक्षो यातूनां हननी" इति सूत्रेण रक्षस् शब्दात् यत्प्रत्यये विभक्तिकार्ये "रक्षस्या" इति भवति ।

कथा दाशेम—३३ पृष्ठे द्रष्टव्यम् ।

अभ्र आँ अपः—४२ पृष्ठे द्रष्टव्यम् ।

श्रृणुधी गिरः—श्रुधातोः श्नुपि रौ "श्रुवः श्रृ च" इति सूत्रेण श्रुवः श्रृभावे विधानसामर्थ्यात् "उतश्च प्रत्ययादि"ति हेर्लुगभावे "श्रुश्रृणुपृकृवृभ्यश्छन्दसि" इति सूत्रेण हेर्धि, आदेशे "अन्येषामपी"ति दीर्घे "श्रृणुधी" इति भवति ।

अधः स्विदासीत्—अत्र "विचार्यमाणानामि"ति विहितप्लुतस्य "उपरिस्विदासीदिति च" इति सूत्रेणाऽनुदात्तत्वे "अधः स्विदासीत्" इति भवति।

तमसस्पारमस्य—अत्र षष्ठीसमासे "तत्पुरुषेकृतीत्य"लुकि रुत्वे विसर्गे "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" इति सूत्रेण षष्ठी विसर्गस्य सादेशे "तमसस्पारमस्य" इति सिद्धम् ।

पितृयाणम्—अत्र "छन्दस्यृदवग्रहात्" इति सूत्रेण णत्वे "पितृयाणम्" इति भवति ।

मरुद्भिरुग्रः पृतनासु साळ्हा—अत्र सहेः तृचि अनभादिकार्ये सहता इति जाते ढत्वजश्त्वादिकार्ये दीर्घे प्रातिशाख्यभाष्येणाऽचोमध्यस्थस्य डस्य ळत्वे ढस्य ळ्ह विहिते "साळ्हा" इति ( अत्रत्य प्रश्नोत्तरेऽचोर्मध्यस्थस्येत्यादि प्रातिशाख्यकौमुदीमूलमेव पर्याप्तम् )।

२—बहुलं छन्दस्यमाङ्योगेपि—माङ्योगेऽप्यमाङ्योगेऽपि बहुलमडाटौ भवतः अमाङ्योगेऽपि न भवतः माङ्योगेऽपि च भवतः इत्यर्थः ।

उदाहरणञ्चात्र—जनिष्ठा उग्रः सहसे तुराय । मा वः क्षेत्रे परबीजान्यवाप्सुः ।

छन्दस्यनेकमपि साकाङ्क्षम्—हीत्यनेन युक्तं साकाङ्क्षमनेकमपि नाऽनुदात्तम् अनृतं हि मत्तो वदति स्यादित्यर्थः । पाप्मा चैनं पुनाति । इत्युदाहरणम् ।

तवै चान्तश्च युगपत्—तवैप्रत्ययान्तस्याऽन्त उदात्तो गतिश्चाऽनन्तरः प्रकृत्या युगपच्चैतदुभयं स्यादित्यर्थः । अन्वे तवा उ । इत्युदाहरणम् ।

स्वाङ्गशिटामदन्तानाम्—४२ पृष्ठे द्रष्टव्यम् ।

३—शरावती—२ पृष्ठे द्रष्टव्यम् ।

रुद्रहतः—रुद्रेण हतः रुद्रहत इति विग्रहे समासे "समासस्य"इति सूत्रेण अन्तोदात्ते प्राप्ते "तृतीया कर्मणि" इति प्रकृतिभावे रुद्रशब्दस्य रगन्तत्वेनऽन्तोदात्तत्वे "रुद्रहतः" इति भवति ।

आर्यब्राह्मणः—४७ पृष्ठे द्रष्टव्यम् ।

वृकोदरः—वृकस्येवोदरमस्येति । वृकोदरः । अत्र पूर्वपदप्रकृतिस्वरम्बाधित्वा "उदराश्वेषुषु" इति सूत्रेण पूर्वपदस्याऽन्तोदात्तत्वे "वृकोदरः" इति भवति ।

समपादः—अत्र "त्वत्वसमसिमेत्यनुच्चानि" इति सर्वोऽनुदात्तः समशब्दः। पादशब्दो "वृषादीनाञ्च" इत्याऽद्युदात्तः। अत्र समासे "समासस्य" इति सूत्रेणाऽन्तोदात्ते "समपादः" इति भवति।

दक्षिणो बाहुः—अत्र "स्वाङ्गाख्यायामादिर्वा" इति दक्षिणस्याद्यन्तयोः पर्यायेणोदात्तयोः कृतयोः "दक्षिणो बाहुः" "दक्षिणो बाहुः" इति भवति।

आवसथः—२२ पृष्ठे द्रष्टव्यम्।

उष्ट्रक्रोशी—४७ पृष्ठे द्रष्टव्यम्।

४—गतिकारकोपपदात् कृत्—३५ पृष्ठे द्रष्टव्यम्।

निपातस्य चेति—ननु "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" इति सूत्रस्थ तुनुघेत्यादीनां निपातत्वात् "निपातस्य च" इत्यनेनैव दीर्घे सिद्धे त्वादीनां ग्रहणं व्यर्थमिति चेन्न। अद्रव्यार्थाश्चादयो निपातसञ्ज्ञास्युरेवञ्च द्रव्यार्थानां त्वादीनां दीर्घार्थं "निपातस्य च" इति सूत्रस्याऽप्रवृत्तया त्वादीनां ग्रहणस्याऽवश्यकत्वात्। इति शम्।

५—अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रितौ।
दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च॥

व्याख्या—स्वरमनुभवति, इति अनुस्वारः, विविधं सृज्यते, इति विसर्गस्तौ च प्रसिद्धौ। ककारपकारावाश्रयौ ययोस्तौ पराश्रयौ≍क≍पौ, जिह्वामूलीयोपध्मानीययोः पराश्रयत्वकथनेनेतरेषामनुस्वारादीनां पूर्वाश्रितत्वं सूचितम्। यद्यपि खकारफकारयोरप्याश्रयत्वमनयोस्तथा च भेदचतुष्टमापतितम्, तथापि पराश्रितस्वरूपसाधर्म्येणानयोर्भेदद्वयमेवाङ्गीकृतम्। द्विःस्पृष्ट इति बह्वृचानामेष प्रसिद्धः। श्लेषोऽल्लैह्वेति। उक्तञ्च वर्णरत्नदीपिकायाम्—

"द्विःस्पृष्टता च विज्ञेया डढयोः स्वरमध्ययोः।
"पदकाले वियुज्यन्ते द्विःस्पृष्टो न भवेत्तदा" इति।

अत्रापि 'द्विः स्पृष्ट' इति पाठो युक्तः। एकविंशतिः स्वराः, पञ्चविंशतिः स्पर्शाः, अष्टौ यादयः, यमाः, चत्वारः, एवमाष्टपञ्चाशात् इति पूर्वनिरूपिताः। तर्हि इत्थं त्रिषष्टिः ऌकारः प्लुत एव च एवञ्च ऌकारस्य प्लुतसम्भवात् चतुःषष्टिर्वर्णाः इति ज्ञेयम्।

६—अयोगवाहेति–वाहयन्ति निर्वाहयन्ति कार्यमिति वाहाः, अविद्यमानो

योगो वर्णसमाम्नायेषु पाठो येषान्तेऽयोगास्ते च ते वाहाः अयोगवाहाः=अनुस्वार, विसर्ग, जिह्वामूलीय, उपध्मानीयाः इति । कं कः ≍क≍ पं इत्यादि कुं खुं गुं घुं यमाः, इति यमस्वरूपम् । ननु—

"अनन्त्यश्च भवेत्पूर्वो ह्यन्तश्च परतो यदि ।
तत्र मध्ये यमस्तिष्ठेत्सवर्णः पूर्ववर्णयोः ॥

इति नारदीयशिक्षावचनात् ऋक्तन्त्रप्रणेतृवचनाच्च यमानां विंशतित्वमायातं तथा च "चत्वारश्च यमाः स्मृताः" इत्यसङ्गतम् । न नु "कुं खुं गुं घुं यमाः" इति न्यासग्रन्थेन तेषां चतुष्टयत्वं "कचटतपाः कुः खछठथफाः खुः" इत्यादि परिभाषया तावतापि तेषां विंशतित्वलाभादिति चेन्न । प्रथमयम द्वितीययमादि भेदेन तेषां विभाजने सङ्ख्याचतुष्टयत्वलाभात् ।

रङ्ग इति—रज्यतेऽनेन पूर्वो वर्णः इति रङ्गो वर्णविशेषः । तथा च नारदः—

"नकारान्ते पदे पूर्वं व्यञ्जनैश्च यवोहिषु ।
अर्द्धमात्रा तु पूर्वस्य रज्यते त्वणुमात्रया" ॥

यकारवकारहकारेषु परतो व्यञ्जनैर्व्यंञ्जकवर्णैरुपलक्षिते नकारान्ते पदे अणुमात्रया पादमात्रया "तदर्थमणु इति पूर्वस्याकारेरर्द्धमात्रा रज्यते इति तदर्थः । नकारस्य रुत्वे जाते योऽनुनासिको विधीयते स रङ्गः इत्यादि बह्वोर्थाः रङ्गस्येति बोध्यम् । 'खे अराँ' इत्युदारुणम् ।

नादिन्—नादप्रयत्नवान् इत्यर्थः । 'ह' इत्यादि ।

श्वासिन्—श्वासप्रयत्नवान् इत्यर्थः । 'फ' 'छ' इत्याद्युदाहरणानि ।

१६३६

सूचना—सूत्रनिर्देशप्रसङ्गे समस्तसूत्रोल्लेखनमावश्यकम् ।

१—उपसंवादाशङ्कयोश्च । तयोर्य्वावचि संहितायाम् । निष्ठा च द्व्यजनात् । मान्त्रोपज्ञोपक्रमच्छाये नपुंसके ।

एषां सूत्राणामर्थाः लेख्याः । १०

२—उक्थशासः । मादयैते । ब्रह्मसामम् । ज्या इयम् । वात्रघ्नमितरम् । पीत्वी सोमस्य । भरता जातवेदसम् । ब्रह्मचारिणमिच्छते । वर्चस्याः । तृचं सूक्तम् । वास्तव्यम् ।

एषां मध्ये सप्तसु प्रयोगेषु वैदिकप्रक्रियाकार्याणि शास्त्रनिर्देश-

पूर्वकं प्रदर्शनीयानि । १४

३—तुभ्यम् । शरावती । जाया । कल्याणः । आहवनीये । भार्यासौश्रुतः । उपशालम् । अग्निम् ।

एषां मध्ये पञ्चसु प्रयोगेषु ससूत्रनिर्देशं स्वरविशेषाः प्रतिपादनीयाः स्वरचिह्नानि च प्रदर्शनीयानि । १०

४—उपग्रहः । स्फिग् । नप् । प्रचयः ।

इति सञ्ज्ञाशब्दान् व्याख्याय । दाघर्ति० इति 'प्रसित' इति सूत्रं समग्रमुद्धरणीयं व्याख्यातव्यञ्च । ६

अथवा—'तयोर्य्वावचि संहितायाम्' इति सूत्रारम्भप्रयोजनं सुस्पष्टं प्रतिपादनीयम् ।

५—उदात्तादिस्वराणां 'नवपदशय्या' ( नवपदसञ्ज्ञा इति पाठान्तरम् ) स्वरूपं सोदाहरणं स्पष्टीकर्तव्यम् । ५

अथवा—व्याकरणाङ्गानां वेदपुरुषस्य मुखत्वादिकं केनाभिप्रायेणेति सयुक्तिकं प्रतिपादनीयम् ।

६—वर्णानां त्रिषष्टित्वं चतुःषष्टित्वं च कथमिति सप्रपञ्चं निरूपणीयम् । ५

## प्रश्नोत्तराणि—

१—उपसंवादाऽऽशङ्क्योश्च—पणबन्धे आशङ्कायाञ्च लेट् स्यात् इत्यर्थः । अहमेव पशूनामीशे । नेज्जिह्मायन्तो नरकं पताम । इत्युदाहरणम् ।

तयोर्य्वावचि संहितायाम्—इदुतोर्यकारवकारौस्तोऽचि संहितायामित्यर्थः । अग्ना ३ याशा । पटा ३ वाशा । अग्ना ३ यिन्द्रम् । पटा ३ वुदकम् । इत्युदाहरणानि ।

निष्ठा च द्व्यजनात्—निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तो न त्वाकार स्यादित्यर्थः । "दत्तः" इत्युदाहरणम् ।

मात्रोपज्ञोपक्रमच्छाये नपुंसके—मात्रादिषु परतो नपुंसकवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यादित्यर्थः । भिक्षामात्रम् । पाणिन्युपज्ञम् । नन्दोपक्रमम् । इषुच्छायम् । इत्युदाहरणानि ।

२—उक्थशासः-उक्थानि उक्थैर्वा शंसन्ति इति उक्थशासः यजमानाः ।

अत्र "मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्" इति सूत्रेण ण्विन् प्राप्ते तम्प्रबाध्य "श्वेतवहादीनां डस्पदस्येति वक्तम्" इति डसि डित्वाट्टिलोपे न-लोपे "अत उपधायाः" इति सूत्रेण वृद्धौ जसि विभक्तावनुबन्धलोपे सस्य रुत्वे विसर्गे "उक्थशासः" इति भवति।

मादयैते—मादाति ण्यन्तात् लेटि आतामि शपिगुणेऽयादेशे मादय + आता-मिति स्थिते "आत ऐ" इति सूत्रेणाऽकारस्य 'ऐ' आदेशे "टित आत्मने-पदानां टेरे" इत्येत्वे "मादयैते" इति भवति।

ब्रह्मसामम्—३८ पृष्ठे द्रष्टव्यम्।

ज्या इयम्—१५ पृष्ठे द्रष्टव्यम्।

वार्त्रघ्नमितरम्—इत्यत्र "अड्डुडतरादिभ्यः पञ्चभ्यः" इति सूत्रेण स्वमोरद्डादेशे प्राप्ते "नेतराच्छन्दसि" इति निषेधे "अतोऽम्" इति अमादेशे पूर्वरूपे "इतरम्" इति भवति।

पीत्वी सोमस्य—२९ पृष्ठे द्रष्टव्यम्।

भरता जातवेदसम्—२३ पृष्ठे द्रष्टव्यम्।

ब्रह्मचारिणमिच्छते—अत्र प्रयोगे परस्मैपदविधानेन इच्छति इति प्राप्ते "व्यत्ययो बहुलम्" इति सूत्रेण व्यत्ययेनाऽऽत्मनेपदे "इच्छते" इति भवति लोके तु "ब्रह्मचारिणमिच्छति" इति।

वर्चस्याः—वर्चस्वानुपधानो मन्त्रः आसामिष्टकानां वर्चस्याः इति। अत्र "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" इति सूत्रेण यत् प्रत्यये मतुपो लुकि च जसि अनुबन्धलोपे सस्य रुत्वे विसर्गे "वर्चस्याः" इति सिद्धम्।

तृचं सूक्तम्—४२ पृष्ठे द्रष्टव्यम्।

वास्तव्यम्—वास्तुनि भवमिति विग्रहे "ऋत्व्यवास्त्व्यवास्त्वमाध्वी-हिरण्ययानि छन्दसि" इति सूत्रेण वास्तुशब्दात् निपातनात् यत् प्रत्यये यणा-देशे च विभक्तिकार्ये "वास्तव्यम्" इति भवति।

३—तुभ्यम्-अत्र "ङयि च" इति सूत्रेणाऽद्युदात्ते "तुभ्यम्" इति भवति।

शरावती—१ पृष्ठे द्रष्टव्यम्।

जाया—२१ पृष्ठे द्रष्टव्यम्।

कल्याणः—४७ पृष्ठे द्रष्टव्यम्।

आहवनीये—३५ पृष्ठे द्रष्टव्यम् ।

भार्यासौश्रुत इति—सुष्ठु शृणोति इति सुश्रुत्, तस्यापत्यं सौश्रुतः। भार्याप्रधानः सौश्रुत इति विग्रहे शाकपार्थिवादित्वादुत्तरपदलोपी समासे "गोत्राऽन्तेवासिमाणवब्राह्मणेषु क्षेपे" इति सूत्रेण पूर्वपदस्याद्युदात्तत्वे "भार्यासौश्रुतः" इति भवति ।

उपशालम्—अत्राऽव्ययीभावसमासे 'कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे" इति सूत्रेणोत्तरपदस्याऽऽद्युदात्तत्वे "उपशालम्" इति भवति।

अग्निम्—२२ पृष्ठे द्रष्टव्यम् ।

४—उपग्रहः—परस्मैपदात्मनेपदे इति 'सुप्तिङुपग्रह' इत्यत्र स्पष्टम् ।

नप्—नपुंसकम् । 'नब्विषयस्यानिसन्तस्ये'त्यत्र स्पष्टम् ।

प्रचयः—स्वारितसमुदायस्य संज्ञा ।

दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च" इति सूत्रस्वरूपम् । दाधर्तीत्यादयोऽष्टादश निपात्यन्ते । तद् यथा—आद्यास्त्रयो धृङो धारयतेर्वा । भवतेर्यङ्लुगन्तस्य गुणाऽभावः । तेन भाषायां गुणो लभ्यते । तिजेर्यङ्लुगन्तात्तङ् । इयर्तेर्लटि हलादिः शेषाऽपवादो रेफस्य लत्वमित्वाऽभावश्च निपात्यते । अलर्षि युध्मखजकृत्पुरन्दर । सिपा निर्देशो न तन्त्रम् । अलर्ति दक्ष उत । फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतरि अभ्यासस्य नीगागमो निपात्यते । अन्वापनीफणत् । स्यन्देः सम्पूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक् धातुसकारस्य षत्वम् । करोतेर्यङ्लुगन्तस्याऽभ्यासस्य चुत्वाऽभावः । क्रन्देर्लुङि च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाऽभावो निगागमश्च, कनिक्रदज्जनुषम् । अक्रन्दीदित्यर्थः बिभर्तेरभ्यासस्य जश्त्वाऽभावः । वि यो भरिभ्रदोषधीषु । ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो धातोर्ऋकारलोपश्च । दविध्वतो रश्मयः सूर्यस्य । द्युतेरभ्यासस्य सम्प्रसारणाऽभावोऽत्वं विगागमश्च । दविद्युतद्दीद्यच्छोशुचानः । तरतेः शतरि श्लौ अभ्यासस्य रिगागमः । 'सहोर्जा तरित्रतः'। सृपेः शतरि श्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य । वृजेः शतरि श्लावभ्यासस्य रीक् । मृजेर्लिटि णल्

अभ्यासस्य रुक् धातोश्च युक्। गमेराङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाऽभावो नीगागमश्च। वदयन्ती वेदागनीगन्ति कर्णम्। ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्वलितिक्षरितिक्षमित्यमितीति च। एतेऽष्टादश निपात्यन्ते। तत्र ग्रसु स्कम्भु स्तम्भु एषामुदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इण्निपात्यते। युवं शचीभिर्ग्रसितामसुञ्चतम्। विष्कभिते अजरे। येन स्वः स्तभितम्। सत्येनोत्तभिता भूमिः। स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति। चते याचने। कस गतौ। आभ्यां क्तस्येडभावः। चत्तो इतश्चत्तामुतः। त्रिधा ह श्यावमश्विना विकस्तम्। उत्तानाया हृदयं यद्विकस्तम्। निपातनबहुत्वाऽपेक्षं सूत्रे बहुवचनं 'विकस्ता' इति। तेनैकवचनान्तोऽपि प्रयोगः साधुरेव। शसु शंसु शासु एभ्यस्तृच इडभावः। एकस्त्वष्टुरश्वस्याविशस्ता। ग्रावग्राभ उत शंस्ता प्रशास्ता। पोता तरतेर्वृङ्वृञोश्च तृच उट् ऊट् एतावागमौ निपात्येते। तरुतारं रथानाम्। तरूतारम्। वरुतारम्। वरूतारम्। वरूत्रीभिः सुशरणो नो अस्तु। अत्र ङीबन्तनिपातनं प्रपञ्चार्थम्। वरूतृशब्दो हि निपातितः। ततो ङीपा गतार्थत्वात्। उज्वलादिभ्यश्चतुर्भ्यः शपः इकारादेशो निपात्यते। ज्वल दीप्तौ। क्षर संचलने। टुवम् उद्गिरणे। अम गत्यादिषु। इह क्षरितीत्यस्याऽनन्तरं क्षमितीत्यपि केचित्पठन्ति। तत्र क्षमूष् सहने इति धातुर्बोध्यः। भाषायान्तु ग्रस्तस्कब्धस्तब्धोत्तब्धचतितविकसिताः। विशसिता। शंसिता। शासिता। तरिता। तरीता। वरिता। वरीता। उज्वलति। क्षरति। पाठान्तरे। क्षमति। वमति। अमति। इति शम्।

'तयोर्य्वावचि'गतिसूत्राऽऽरम्भफलम्—७ पृष्ठे द्रष्टव्यम्।

५—अन्तोदात्तमाद्युदात्तमनुदात्तं नीचस्वरितम्।
मध्योदात्तं स्वरितं द्व्युदात्तं त्र्युदात्तमिति नवपदशय्या।

अन्तोदात्त इत्याद्यारम्य त्र्युदात्तमित्येतत्पर्यन्तं स्वराणाम् नामनिर्देशः एवञ्च नवसु पदेषु शय्या स्थितिर्निर्दिष्टानां स्वराणामित्यर्थः।

अग्निः सोमः प्र वो वीर्यं हविषां स्वर्बृहस्पति रिन्द्राबृहस्पती।

इमानि उदाहरणानीति क्रमशः स घटनीयम्।

अग्निरित्यन्तोदात्तं फिट्स्वरेण प्रत्ययस्वरेण वा सोम इत्याद्युदात्तं वृषादित्वात्

वृषादीनाञ्चेति भावः । प्रेत्युदात्तं "निपाता आद्युदात्ताः" इत्यनेन व इत्यनुदात्तम् "अनुदात्तं सर्वमपादादौ" इत्यधिकृत्य "बहुवचनस्य वस्नसौ" इति तद्विधानात् । वीर्यंनीचस्वरितम् । "बिल्वभक्ष्यवीर्याणि छन्दसि" इत्यन्तं स्वरितम् । फिट्स्वरेण हविश्शब्दस्याऽन्तोदात्तत्वे "अनुदात्तौ सुप्पितौ" इत्यामोऽनुदात्तत्वे मध्योदात्तत्वम् । "न्यङ्स्वरौ स्वरितौ" इति स्वः स्वरितम् । "उभे वनस्पत्यादिषु युगपत्" इति पूर्वोत्तरपदयोः प्रकृतिस्वरेणाऽद्युदात्तत्वे बृहस्पतिरिति द्व्युदात्तं जातम् । उक्तरीत्या द्व्युदात्तबृहस्पतिशब्दस्येन्द्रशब्देन समासे "देवताद्वन्द्वे च" इति स्वरे इन्द्राबृहस्पती इति त्र्युदात्तम् ।

एषु नवसु पदेषु स्वराणां सर्वेष्वपि वेदेषु स्थितिर्नियतेति भावः ।

व्याकरणाद्यङ्गानामिति—वेदस्य पादौ छन्दः गायत्र्यादिच्छन्दसां ज्ञापकं शास्त्रं पिङ्गलसूत्रादि, पादविकलस्य गमनाऽभाववत्, अनुष्टुबादिश्छन्दोऽन्तरेण तदुच्चारणाऽसम्भवात् । हस्तौ तस्य कल्पः कल्पसूत्रं वेदविहितकर्मणामानुपूर्व्येण कल्पनाशास्त्रम् हस्ताऽभावेऽङ्गिनः क्रियासामर्थ्यविरहः इव कल्पसूत्रज्ञानाऽभावेऽधीतोऽपि वेदो यागाद्यनुष्ठानानर्हः । ज्योतिषां नक्षत्रादिज्ञानानामयनं स्थानं ज्यौतिषशास्त्रं चक्षुर्नेत्रकल्पं वेदस्य यज्ञादिशुभकर्मणाम् करणसमयज्ञापकत्वात् । तथा तस्य निरुक्तं पदविभागमन्त्रार्थदेवतानिरूपणार्थं शास्त्रं श्रोत्रं निर्वचनं विना श्रुतोऽपि सोऽश्रुत एव । वेदस्य शिक्षा स्वरवर्णोच्चारणज्ञापकं शास्त्रं घ्राणं नासिका घ्राणेन्द्रियविकलस्य गन्धाग्रहणवच्छिक्षां विना सम्यक् स्वरवर्णोच्चारणविध्यभावे फलवैगुण्यप्रसङ्गः सुप्रयुक्तस्यैव फलजनकत्वात् । व्याकरणशब्दबोधकमम्लेच्छत्वकारकं शास्त्रं मुखं तस्य, वागिन्द्रियं विना हृदिस्थस्यापि पदार्थस्य परावबोधनाक्षमत्वमेवं व्याकरणमन्तरा यथावद्विभक्त्यादिकरणासामर्थ्यम् । एतेन मध्यत्रयस्य वेदज्ञानेन्द्रियत्वमितरत्रयेण कर्मेन्द्रियत्वञ्च प्रदर्शितम् । तथा च एकेनापि विकलो न कार्यः । साम्प्रतं तदङ्गानि पृथक् पृथक् निरूप्य साङ्गतदध्ययने फलमाह—

"तस्मात् साङ्गमधीत्येव ब्रह्मलोके महीयते" ॥ इति ।

अधीत्यैवेत्येवकारेण सर्वाङ्गशून्यस्य कतिपयाङ्गसहितस्य वाऽध्ययने ब्रह्मलोकेऽध्येतुः सत्कारानर्हत्वं सूचितम् । इदं साङ्गवेदाध्ययनकथनं पुराणादिसहित-

स्याप्युपलक्षणम् । तथा च याज्ञवल्क्यः—

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः,
वेदस्थानानि विद्यानां धर्मस्य च चतुर्दश" ॥ इति ।

६–वर्णानां त्रिषष्टित्वं चतुःषष्टित्वञ्च ५७ पृष्ठे द्रष्टव्यम् ।

१६४०

सूचना—स्वरोपदर्शनाऽवसरे स्वरचिह्नानि कर्तव्यानि ।

१—घृतस्य यजते । तारिषत् । अपलुपं नाशकत् । ओजस्या तनूः । रेवान् । चक्रा जरसम् । जनीयन्तो न्वग्रहः । अद्यामावास्येत्यात्थ ३। अग्निचित् भाया३त् । नृमणाः ।

एतेषां मध्ये पञ्च तु वैदिकविशेषकार्याणां सप्रमाणमुल्लेखो विधेयः।

अथवा—'तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः' 'अङ्ग इत्यादौ च' इति सूत्रे सोदाहरणं व्याख्याय, 'अकृत्सार्वधातुकयोः' इति दीर्घेणैव लक्ष्ये सिद्धे "अश्वाघस्यात्" इति सूत्रस्य फलमस्ति नवेति विवेचनीयम् । १०

२—'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इत्यस्य फलप्रमाणे समुल्लिख्य खलप्याशा । क्षत्रिया । पटुपटु । उच्चारपदेन प्रस्थितः । सुगन्धितेजनाः । एतेषु स्वरविशेषाः सशास्त्रं प्रदर्शनीयाः । १०

३—गमनज्येष्ठम् । द्विसुवर्णधनम् । शितिपादः । कृष्णाजिनम् । अत्यङ्कुशो नागः ।

एषु ससूत्रं स्वरान्निर्दिश्य 'तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्योः' इति सूत्रे कुत्सनाऽभीक्ष्ण्यग्रहणं कस्य विशेषणमिति । सफलमभिधीयताम् । १०

४—'तास्यनुदात्तेन्ङित०' 'कुरुगार्हपतरिक्त०' इति सूत्रद्वयं सार्थकं वर्णयित्वा 'गतिरनन्तरः' इत्यत्र 'अनन्तर' ग्रहणस्य प्रयोजनं विशदं निरूपणीयम् । १०

५—'अग्निः सोमः प्र वो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती' अत्र स्वरान् प्रदर्श्य ।

अनुस्वारे विवृत्यां तु विरामे चाक्षरद्वये ।

द्विरोष्ठ्यौ तु विगृह्णीयात् यत्रौकारवकारयोः ।
इति कारिका सुस्पष्टं व्याख्येया । १०

अथवा—कीदृशो रङ्गवर्णः तदुच्चारणप्रकारश्च कः इति, ऊष्मणां कति गतय इति च निगद्य—

यद्योभावप्रसन्धानमुकारादि पर पदम् ।
स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥

इति पद्यस्याशयो निरूपणीयः । १०

## प्रश्नोत्तराणि—

१—घृतस्य यजते—अत्र प्रयोगे "यजेश्च करणे" इति सूत्रेण षष्ठी तेन "घृतस्य यजते" इति भवति ।

तारिषत्—२३ पृष्ठे द्रष्टव्यम् ।

अपलुपं नाशकत्—अपलोप्तुमित्यर्थे, अपपूर्वकच्छेदनार्थकलुप्धातोः "शकि णमुल्कमुलौ च" इति सूत्रेण कमुल्प्रत्ययेऽनुबन्धलोपे कित्वाद्गुणाऽभावे विभक्तिकार्ये "अपलुपम्" इति । एवञ्च "अपलुपं नाशकत्" इति भवति ।

ओजस्या तनूः—ओजो यस्याः यस्यां वा इति विग्रहे मतुपम्बाधित्वा "मत्वर्थे मासतन्वोः" इति सूत्रेण यत्प्रत्ययेऽनुबन्धलोपे जसि विभक्तौ जकारस्येत्संज्ञायां लोपे च दीर्घे सस्य रुत्वे विसर्गे "ओजस्या तनूः" इति भवति ।

रेवान्—रयि शब्दात "तदस्यास्त्यस्मिन्निति मतुप्" इति सूत्रेण मतुपि "रयेर्मतौ बहुलम्" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति सूत्रेण पूर्वरूपे "छन्दसीरः" इत्यनेन मकारस्य वकारे गुणे विभक्तिकार्ये "रेवान्" इति सिद्धम्।

चक्राजरसम्—चक्रेति लिटो मध्यमपुरुषबहुवचनस्य रूपमत्र "द्व्यचोऽतस्तिङः" इति सूत्रेण दीर्घे "चक्रा" इति भवति ।

जनीयन्तो न्वग्रवः—जनमिच्छन्तः इति विग्रहे क्यचि प्रत्ययेऽनुबन्धलोपे "अपुत्रादीनामिति वाच्यम्" इति बलात "क्यचि च" इति सूत्रेणाऽवर्णस्येकारे लटि, लटः शत्रादेशे जसि विभक्तिकार्ये "जनीयन्तः" इति भवति ।

अद्याऽमावास्येत्यात्थ३—अत्र प्रयोगे "निगृह्याऽनुयोगे च" इति सूत्रेण वाक्यस्य टेः प्लुतत्वे "अद्याऽमावास्येत्यात्थ ३" इति भवति ।

अग्निचित् भाया३ त्—अत्र प्रयोगे "चिदिति चोपमार्थे प्रयुज्यमाने"

इति सूत्रेण प्लुतत्वे "अग्निचित् भाया३ त्" इति भवति ।

**नृमणाः**—अत्र प्रयोगे "छन्दस्यृदवग्रहात्" इति सूत्रेण णत्वे "नृमणाः" इति भवति ।

**तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः**—तदस्ति अस्य अस्मिन् वा तद्वान् । उपाधीयते इत्युपाधनम् । तथा च मत्वन्तात्प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्स्याद्यत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति मतोश्च लुक् । अथवैवं बोध्यम्—मत्वन्तप्रकृतिकात्प्रथमान्तादुपधानकरणीभूतमन्त्रार्थकादिष्टकारूपसम्बन्धिनि यत् स्यान्मतोश्च लुक् । इत्यर्थः । उदाहरणञ्चात्र–वर्चस्याः । ऋतव्याः ।

**अङ्ग इत्यादौ च**—प्रकृत्या भवतीतीत्यस्य सम्बन्धः । अतिक्रान्तप्रत्यवमर्शिना तच्छब्देन इति शब्दार्थं व्याचष्टे । तस्याऽङ्गशब्दस्याऽऽदिस्तदादिः तद्रूपो योऽकारस्तस्मिन् परे पूर्वो य एङ् स प्रकृत्या भवतीत्यर्थः ।

नन्वत्र चकारः किमर्थं इति चेच्छृणु । असति चकारेऽङ्गशब्दस्यैवैङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः । तथा च "अङ्गे अङ्गे" इत्यत्रैव स्यात्, "अङ्गे अदीव्यत्" इत्यत्र न स्यात् सति तु तस्मिन्नङ्गशब्दस्य य एङ् यत्र कुत्रचित् अतिप्रकृत्या भवति तदादौ चाऽति परतो यः कश्चिदेङ् स प्रकृत्याभवतीत्ययमर्थो भवति । तेन "अङ्गे अङ्गे अदीव्यत्" "प्राणो अङ्गे" इत्युभयत्राऽपि भवति ।

**अश्वाघस्यादिति**—ननु "अश्वायन्तो मघवन्" मात्वा वृका अघायवः" इत्यादौ "अकृत्सार्वधातुकयोर्दीर्घः" इति सूत्रेण दीर्घेणैव सिद्धे "अश्वाघस्यात्" इति सूत्रं व्यर्थमिति चेन्न "न च्छन्दसी"ति निषेधो नेत्वमात्रस्य किन्तु दीर्घस्याऽपीति ज्ञापनेन "अश्वायन्तो मघवन्" मा त्वा वृका अघायवः" इत्यादीनां सिद्धयेऽस्य ( अश्वाघस्यात् इत्यस्य ) आवश्यकत्वात् ।

**२—सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः**—इत्यस्य फलम् ७ पृष्ठे द्रष्टव्यम् ।

**खलप्व्याशा**—२४ पृष्ठे द्रष्टव्यम् ।

**क्षत्रिया**—अत्र प्रयोगे "यान्तस्याऽन्त्यात्पूर्वम्" इति फिट्सूत्रेण मध्योदात्ते वा क्षत्रशब्दात् "क्षत्राद्घः" इति सूत्रेण घविधानेन "आद्युदात्तश्च" इति

सूत्रेण प्रत्ययस्याऽऽद्युदात्तत्वे "क्षत्रिया" इति भवति।

**पटुपटु**—अत्र "प्रकारे गुणवचनस्य" इति सूत्रेण द्वित्वे "प्रकारादि द्विरुक्तौ परस्यान्त उदात्तः" इति फिट्सूत्रेण परस्यान्तोदात्ते "पटुपटु" इति भवति।

ननु "कर्मधारयवदुत्तरेषु" इति कर्मधारयवद्भावादेव "समासस्य" इति सूत्रेणाऽन्तोदात्ते सिद्धे व्यर्थमिदं सूत्रमिति वाच्यम्, तस्य पाणिनीयात् पूर्वं प्रवृत्तत्वेनाऽदोषात्।

**उच्चारपदेन प्रस्थितः**—उच्चारो घञन्तस्तेन "थाथ घञ्क्ताजबित्रकाणाम्" इति सूत्रेणाऽन्तोदात्तः ततश्च उच्चारस्य पदमिति समासे "समासस्य" इति सूत्रेणाऽन्तोदात्ते प्राप्ते "पदेऽपदेशे" इति सूत्रेण पूर्वपदप्रकृतिस्वरे "उच्चारपदेन प्रस्थितः" इति भवति। उच्चारः पुरीषक्रिया तस्य पदेन व्याजेन प्रस्थितः गतः इत्यर्थः।

**सुगन्धितेजनाः**—अत्र प्रयोगे "सुगन्धितेजनस्य ते वा" इति आदिर्द्वितीयं ते शब्दश्चेति त्रयः। पर्यायेणोदात्ताः तेन "सुगन्धितेजनाः" सुगन्धितेजनाः। "सुगन्धितेजनाः" इति भवति।

३—**गमनज्येष्ठम्**—अत्र समासे मयूरव्यंसकादित्वात् राजदन्तादित्वात् वा विशेषणस्य ज्येष्ठ इत्यस्य परनिपाते "समासस्य" इति सूत्रेणऽन्तोदात्ते प्राप्ते "अज्याऽवमकन्पापवत्सु भावे कर्मधारये" इति सूत्रेण पूर्वपदप्रकृतिस्वरे "गमनज्येष्ठम्" इति भवति।

**द्विसुवर्णधनम्**—द्वे सुवर्णे परिमाणमस्येति द्विसुवर्णं तदेव धनं द्विसुवर्णधनमत्र समासानन्तरं "समासस्य" इति सूत्रेण अन्तोदात्ते प्राप्ते "हिरण्यपरिमाणं धने" इति सूत्रेण वैकल्पिकपूर्वपदप्रकृतिस्वरे "द्विसुवर्णधनम्" पक्षे समासस्वरेऽन्तोदात्ते "द्विसुवर्णधनम्" इति भवति।

**शितिपादः**—अत्र शितिरिति "वर्णानां तणतिनितान्तानाम्" इति सूत्रेणाऽऽद्युदात्तः पादशब्दश्च वृषादित्वात् "वृषादीनाञ्च" इति सूत्रेणाऽऽद्युदात्तेऽत्र समासे सति "समासस्य" इति सूत्रेण अन्तोदात्ते प्राप्ते तम्प्रबाध्य "शितेर्नित्याऽबह्वज्बहुव्रीहावभसत्" इति सूत्रेण शितेः परस्य नित्याबह्वचः उत्तरपदस्य प्रकृतिस्वरे "शितिपादः" इति भवति।

**कृष्णाऽजिनम्**—अत्र प्रयोगे मित्राऽजिनयोरुत्तरपदयोरन्त उदात्तः स्यादित्यर्थक "संज्ञायां मित्राजिनयोः" इति सूत्रेणाऽन्तोदात्ते "कृष्णाऽजिनम्" इति भवति ।

**अत्यङ्कुशो नागः**—अङ्कुशमतिक्रान्त इत्यङ्कुशो नाग इति विग्रहे समासे समासप्रयुक्तकार्ये 'अत्यङ्कुश' इत्यत्र अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तः स्यादित्यर्थक 'अतेरकृत्पदे' इति सूत्रेणाऽन्तोदात्ते "अत्यङ्कुशो नागः" इति भवति ।

**तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोरिति**—ननु किं कुत्सनाऽभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणम्, एतयोरर्थयोर्गोत्रादीनि भवन्ति, तानि च तिङः पराण्यनुदात्तानि भवन्ति, आहोस्विदनुदात्तविशेषणं—तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्त्येतयोरर्थयोरिति । अस्मिन् विचारे निर्णयमाह—'कुत्सनाऽभीक्ष्ण्यग्रहणं' पाठविशेषणम् । अयं चार्थो योगविभागाल्लभ्यते । 'तिङो गोत्रादीनीत्येको योगोऽनुदात्तविधानार्थः । 'कुत्सनाभीक्ष्ण्ययो'रिति द्वितीयो योगः । गोत्रादीनीत्येव । परिभाषेयम् । इह शास्त्रे गोत्रादीनि कुत्सनाऽभीक्ष्ण्यविषयाण्येव ग्राह्याणि । तेन किं फलं सिद्धं भवतीति तेन अन्यत्राऽपि ( चंनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरित्यत्राऽपि ) गोत्रादिग्रहणे कुत्सनादावेव कार्यं ज्ञेयमिति शम् ।

**४—तास्यनुदात्तेदिति**—"तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः" इति सूत्रस्वरूपम् । सूत्रार्थश्च । तासेरनुदात्तेतो ङिददुपदेशादकारान्तोपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात्, ह्नुङिङौ वर्जयित्वा ।

**कुरुगार्हपतेति**—"कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलो दासीभाराणाञ्च" इति सूत्रस्वरूपम् । एषां सप्तानां समासानां दासीभारादेश्च पूर्वपदं प्रकृत्या स्यात्, इत्यर्थः ।

**गतिरनन्तर—इति सूत्रेऽनन्तरग्रहणफलमिति**—"गतिरनन्तरः" इति सूत्रस्थाऽनन्तरग्रहणफलमाह "अभ्युद्धृतः" इति इह च हृतशब्दस्य उच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेणाऽऽद्युदात्त उद्धृतशब्दः । तस्य पुनरभिशब्देन समासः । तस्य "कृद्ग्रहणे गतिकारकपूर्वस्यापिग्रहणम्" इति परिभाषया उद्धृत शब्दः क्तान्तः उत्तरपदम् । एवं समासाऽन्तोदात्तत्वे प्राप्ते, तद्बाधकाऽव्ययपूर्वपदप्रकृतिस्वरत्वे, तदपवादे कृत्स्वरे, तदपवादस्थाथादिस्वरः प्राप्तस्तमपोह्याऽभेरयं स्वरः स्याद् सोऽनन्तरग्रहणेन वार्यते ।

नन्वनन्तरग्रहणेनाप्यसौ दुर्वारः क्तग्रहणपरिभाषयोद्धृतशब्दस्य क्तान्तत्वेऽभेदस्तदाऽनन्तर्यसत्त्वादिति चेन्मैवम्। अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरागतिराश्रीयते। अभिश्च न तथा।

नन्वेवं मा भूदभेः स्वरः इष्टसिद्धिस्तु कथम्? अभ्युद्धृतशब्दे हि उच्छब्दस्य स्वरः इष्यते "ससृष्टं धनमुभयं समाकृतम्" इति मन्त्रे समाकृतशब्दे आङः स्वरदर्शनात्। न चासौ प्रकृतसूत्रेण सिद्ध्यति। प्रथमसमासे तत्प्रवृत्तावपि द्वितीयसमासे थाथादिस्वरस्य प्राप्तेरुक्तत्वात्। न च तं बाधित्वा गतिस्वरः प्रवर्तते, इति वाच्यम्। द्वितीयसमासे उदः पूर्वपदत्वाऽभावात्। अत्रोच्यते—धातोरनन्तर इति व्याख्यानादेव पूर्वपदत्वं विनापि स्वरोऽयं प्रवर्तते। नहि क्तप्रकृतिभूतं धातुम्प्रति पूर्वपदत्वं गतेः सम्भवति। तस्मादभ्युद्धृतं समाकृतमिति तावत्सुस्थम्।

५—"अग्निः सोमः प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती"

अग्निरित्यन्तोदात्तं फिट्स्वरेण प्रत्ययस्वरेण वा। सोम इत्याद्युदात्तं वृषादित्वात् वृषादीनाञ्चेति। प्रेत्युदात्तं "निपाता आद्युदात्ताः" इत्यनेन। व इत्यनुदात्तम् "अनुदात्तं सर्वमपादादौ" इत्यधिकृत्य "बहुवचनस्य वस्नसौ" इति तद्विधानात्। वीर्यं नीचस्वरितम् "बिल्वभक्ष्यवीर्याणि छन्दसि" इत्यन्तं स्वरितम्। फिट्स्वरेण हविश्शब्दस्याऽन्तोदात्तत्वे "अनुदात्तौ सुप्पितौ" इत्यामोऽनुदात्तत्वे मध्योदात्तत्वम्। "स्यङ्स्वरौ स्वरितौ" इति स्वः स्वरितम् "उभे वनस्पत्यादिषु युगपत्" इत्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरेणाऽऽद्युदात्तत्वे बृहस्पतिरिति द्व्युदात्तं जातम् उक्तरीत्या द्व्युदात्तबृहस्पतिशब्दस्येन्द्रशब्देन समासे "देवता द्वन्द्वे च" इति स्वरे इन्द्राबृहस्पती इति त्र्युदात्तम्।

अनुस्वारे विवृत्त्यां तु विरामे चाक्षरद्वये।
द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः॥

व्याख्या—अत्र सर्वत्रोच्चारयितव्य इत्यस्य शेषो बोध्यः। विवृताविति। विवेकेन पृथग्भावेन वर्तते इति विवृतिः तथा च नारदः—

"विवृतयश्चतस्रो वै विज्ञेया इति मे मतम्।
अक्षराणि नियोगेन तासां नामानि मे शृणु॥

ह्रस्वादि १ वत्सोऽनुसृता २ वत्सानुसारिणी चाग्रे ३ पाकवत्युभयोर्ह्रस्वा दीर्घवृत्ता ४ पिपीलिका।

क्रमश एतदुदाहरणानि—१ अग्न आयाहि, २ प्रेष्ठवो अतिथिम्, ३ अग्न इत्थेतरा गिरः, ४ निष्ठ एवाना आयुधानीव इति । विरामे पुरतो वर्णोच्चारणाऽभावे, अक्षरद्वये संयुक्ताक्षरद्वये यत्र पदे ओकारौकारौस्तस्तत्र पदे तयोरुच्चारणे ओष्ठौ द्विः वारद्वयं विगृह्णीयात् पृथक् कुर्यात्, अनुस्वारादीन्नोष्ठद्वयं द्विः, पृथक्कृत्योच्चारयेदित्याशयः । यत्रौकारेत्यत्र ओकारस्य औकारस्य वा परत्वे संहितायास्तुल्यत्वेन विनिगमनाविरहादौकारोऽपिच्छेतव्यः इति दिक् ।

रङ्गवर्णस्य लक्षणानि–रज्यतेऽनेन पूर्वो वर्णः इति रङ्गो वर्णविशेषः । नकारस्य रुत्वे जाते योऽनुनासिको विधीयते स रङ्गः । रङ्गोच्चारणप्रकारः—

यथा—सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते ।
एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ॥
रङ्गवर्णं प्रयुञ्जीरन् नो ग्रसेत् पूर्वमक्षरम् ।
दीर्घस्वरं प्रयुञ्जीयात् पश्चान्नासिक्यमाचरेत् ॥

अत्र याज्ञवल्क्यशिक्षाऽपि—

रङ्गे चैव समुत्पन्ने न ग्राह्यं पूर्वमक्षरम् ॥
स्वरं दीर्घं प्रयुञ्जीत पश्चान्नासिक्यमाचरेत् ॥
हृदये चैकमात्रस्तु अर्द्धमात्रस्तु मूर्द्धनि ॥
नासिकायां तथार्द्धश्च रङ्गस्यैवं द्विमात्रता ॥
हृदयादुत्करे तिष्ठन् कांस्येन समनुस्वरन् ॥
मार्दवं च द्विमात्रं च जघन्वाँ २ इति निदर्शनम् ॥
मध्ये तु कम्पयेत् कम्पमुभौ पार्श्वौ समौ भवेत् ॥
सरङ्गं कम्पयेत् कम्पं रथीवेति निदर्शनम् ॥ इति ।

ऊष्मणः अष्टविधा मतयो यथा—

ओभावश्च विवृतिश्च शषसा रेफ एव च ॥
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥

अत्रत्योदाहरणानां प्रयोजनश्चेत् तर्हि ५८ पृष्ठे द्रष्टव्यम्
यद्योभावप्रसन्धानमिति—४४ पृष्ठे द्रष्टव्यम् ।

इति शुभम्भूयात् ।

# अथ परिशिष्टम्

**वैदिकप्रक्रियायाः लौकिकप्रक्रियातो भेदहेतुनिरूपणम्—**

ननु 'रक्षोहागमलघ्वसन्देहाः प्रयोजन'मिति भाष्यात् "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति श्रुतेश्च कृत्स्नस्यैव व्याकरणस्य वैदिकशब्दसाधुत्वार्थं प्रवृत्ततया—

लोके पदपदार्थौ यौ न तौ वेदेऽथवात्र तौ। रूपभेदात् पदं भिन्नमुत्तानादिभिदा स्फुटा॥
वर्णैकत्वात् पदैकत्वं क्वाचित्की रूपभिन्नता। प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम्॥

इति जैमिनीयन्यायमालोक्तरीत्या वैदिकशब्दानां लौकिकशब्दाऽभिन्नतया च स्वरवैदिकप्रक्रिययोः लौकिकप्रक्रियातः पृथक्कृतेः कः आशय इति चेदुच्यते—लौकिकशब्देभ्यः आत्मना जहार देवाः दैवैरित्यादिभ्यो भिन्नानां त्मना, जभार, देवासः, देवेभिः, इत्यादीनां वैदिकशब्दानां सत्त्वेन तन्मात्रव्युत्पादकवैदिकप्रकियायाः पृथक्करणम्। अत एव केषां शब्दानां लौकिकानां वैदिकानाञ्चेति महाभाष्ये लौकिकेभ्यो भिन्नतयैव वैदिकान् व्याहरति भगवान् भाष्यकारः। स्वरस्तु लौकिकप्रयोगे काव्यादौ नाद्रियते इति तत् प्रक्रियाया अपि लौकिकप्रक्रियातः पृथक् करणमिति उपरितलोक्तन्यायमालास्थपद्याभ्यामपि प्रायिकेण पदैक्येनेत्यनेन लौकिकेभ्यो भिन्ना अपि वैदिकाः शब्दाः सन्तीति सूचितमित्यलम्॥

**अनुदात्तं पदमेकवर्जमित्यस्य पारिभाषिकत्वनिरूपणम्—**

परिभाषेयं स्वरविधिविषयेति। नेदं संज्ञासूत्रम् संज्ञाविधायकसूत्राणां प्रायः प्रथमाऽध्याये पाठदर्शनेनास्यातथात्वात्। संज्ञासंज्ञिभावस्याऽप्रतीतेश्च। नापि विधिसूत्रम्, तथा सति क एको वर्जनीय इत्यस्याऽप्रतीत्यापत्तौ विनिगमनाविरहात् तत्तच्छास्त्रविहितोदात्तस्वरितवानां सर्वेषामेव वर्जनापत्तौ आमलकीजः इत्यत्र उदात्तचतुष्टयश्रवणाऽपत्तेः, तत्र हि ङीषः प्रत्ययस्वरेणाऽस्य कृत्स्वरेणोदात्तत्वम् "दीर्घकाशतुषभ्राष्ट्रवटं जे" इति पूर्वपदाऽन्तोदात्तत्वम् "अन्त्यात्पूर्वं बह्वचः" इति लकाराकारस्योदात्तत्वम्। इति युगपदुदात्तचतुष्टयं श्रूयते। अस्य तु मकाराकारोऽवकाशः स्यात्।

नापि नियमसूत्रम्, अनुदात्तस्य केनाप्यप्राप्तेः। नाप्यतिदेशसूत्रम्, वतिघटितत्वाऽभावात्। नाप्यधिकारसूत्रम्, अस्वरितत्वात्।

तत्तत्सूत्रविधेयानां वचनसामर्थ्यादेव निघाताऽप्रवृत्तौ एकवर्जमित्यस्य वैयर्थ्या-पत्तेश्च आद्युदात्तश्च "समानोदरे शयित ओ चोदात्तः" इत्यादीनामसंग्रहापत्तेश्च इति परिशेषात्परिभाषासूत्रमिति स्थितम् ।

"भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति" ।

नन्वत्र प्रत्ययादिति व्यर्थम् परस्य पितः प्रत्ययस्यैव सत्त्वादिति चेन्न । प्रत्ययात्पूर्वं एव उदात्तो यथास्यात्संघातो मा भूदित्यर्थं प्रत्ययादित्यस्याऽऽवश्यकत्वात् ।

नचोदात्तत्वादीनामज्धर्मत्वेन, पितीति सप्तम्या निर्दिष्टपरिभाषोपस्थित्या च अलोऽन्त्यपरिभाषया अचोन्त्यस्यैव भविष्यतीति वाच्यम् । स्वरविधौ संघातः कार्यीत्यर्थस्यापि ज्ञापनेनाऽलोन्त्यपरिभाषायाः स्वरविधावप्रवृत्तेः । अत एव 'कर्षा-त्वत' इति सूत्रेऽन्तग्रहणं चरितार्थमिति ।

नन्वेवमपि प्रत्यये पिति इत्येवोच्यतां पूर्वग्रहणं व्यर्थमिति चेन्न, "सौवर्यः सप्तम्यस्तदन्तसप्तम्यः" इति ज्ञापनार्थत्वात् तेन 'सर्वस्य सुपीत्यस्य' सुबन्तस्य सर्वस्येत्यर्थात् सर्वप्रिय इत्यादौ स्वरसिद्धिः 'ञ्नित्यादिर्नित्य'मित्यत्र ञिदन्तस्य निदन्तस्येत्यर्थलाभश्चेत्यलम् ।

'स्वरविधौ व्यञ्जनमविद्यमानव'दित्येतदत्र नेष्यते ।

ननु मरुत्वानित्यत्र "स्वरविधौ व्यञ्जनमविद्यमानवदिति" परिभाषया तत्राऽकारस्याऽविद्यमानवत्वेन ह्रस्वान्तात्परत्वस्य मतुपि सत्त्वेन "ह्रस्वनुड्भ्यां मतुप्" इति स्वरापत्तिरत आह–'स्वरविधौ व्यञ्जनमविद्यमानवदि'त्येतदत्र नेष्यते इति ।

अयं भावः "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" इति सूत्रे पृथिव्यादिपर्युदासो व्यर्थः उदात्तादेरज्धर्मतया पकारस्यैवादौ सत्त्वेनाऽनुदात्तादित्वाऽभावादिति तत्सामर्थ्येन स्वरविधाविति परिभाषा कल्प्यते, ततश्च पकारस्याऽविद्यमानत्वेनाऽनुदात्तादित्वसत्त्वाद् "देवताद्वन्द्वे चे"ति प्राप्तप्रकृतिस्वरस्य निषेधप्राप्तौ पर्युदासः सार्थकः इति । एवञ्च ज्ञापकसाजात्यात् स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके विधावेव स्वरविधावित्यस्य प्रवृत्त्या प्रकृते 'ह्रस्वनुड्भ्या'मित्यस्य स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वाऽभावात्परिभाषाऽप्रवृत्तौ मरुत्वानित्यत्र न स्वर इति ।

नच इषुमानित्यत्र ह्रस्वनुड्भ्यामित्यस्याऽप्रवृत्तयेऽन्तोदात्तादित्यनुवृत्तेरावश्यकतया अस्यापि स्वरत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वमिति वाच्यम् । स्वरत्व-

व्याप्यधर्मोऽवच्छिन्नविषतायाः प्रतिबन्धकं व्यञ्जनं न भवतीत्यर्थस्वीकारेणाऽन्तोदात्तत्वबुद्धेः प्रतिबन्धाऽसम्भवेऽपि ह्रस्वान्तत्वबुद्धेः प्रतिबन्धात् ह्रस्वनुड्भ्यामित्यस्याऽप्रवृत्तेः । अत एव नुड्ग्रहणं चारितार्थम् । अन्यथा ह्रस्वान्तत्वादेव सिद्धे तद् व्यर्थं स्यादित्यलम् ।

**कारकाद्दत्तश्रुतयोरेवाशिषि—**

ननु संज्ञायामनाचितादीनामित्यनेन कारकापरयोर्दत्तश्रुतयोरन्तोदात्तत्वे सिद्धे कारकादिति सूत्रं व्यर्थं सन्नियमयति—**"कारकत्कान्तस्यान्त उदात्तः आशिषि संज्ञायांचेद् दत्तश्रुतयोरेव"**। एवञ्च देवा एनं देयासुः, देवदत्तः प्रार्थितैर्देवैर्दत्तः इति विग्रहः विष्णुरेनम् श्रूयात् इति विष्णुश्रुतः आशिषि लिङ्लोटाविति विग्रहे लिङ् उदाहरणे च **'क्तिच्क्तौच संज्ञायाम्'** इति आशिषि क्तः एवञ्च सूत्रे एवकार ग्रहणं किमर्थमिति चेन्न—तदभावे आशिषि संज्ञायां दत्तश्रुतयोरन्त उदात्तश्चेत्तर्हि कारकादेवेति विपरीतनियमस्यापत्तौ संश्रुत इत्यादौ अन्तोदात्ततानापत्तेः तदुक्तं मूले—**"कारकावधारण यथा स्याद्दत्तश्रुतावधारणं माभूत्"** इति ।

अयं भावः **"यत्र एवकारस्ततोऽन्यत्र नियमः"** इति सिद्धान्तः दत्तश्रुतयोरेवेति नियमे कारकस्यैवावधारणं भवति अर्थात् कारकात्परस्यान्यस्याशिषि संज्ञायां चान्तोदात्तत्वं न भवति दत्तश्रुतयोस्तु कारकात्परयोरपि भवति गत्युपपदाभ्यां परयोरपि भवति । कारकादेवेति नियमे तु कारकात्परयोरेव सञ्ज्ञायामाशिषि दत्तश्रुतयोः स्यान्न गत्युपपदाभ्यां परयोः, कारकात्परस्य तु अन्यस्यापि अन्तोदात्तत्वं स्यात् एवञ्च संश्रुतो विश्रुत इत्यत्र न स्यादिष्यते चान्तोदात्तत्वमिति ।

नन्वस्मिन् सूत्रे कारकग्रहणं किमर्थं गतिकारकोपपदादित्यतः कारकग्रहणाऽनुवृत्त्यैव सिद्धेरिति चेन्न । तथा सति **"एकयोगनिर्दिष्टानां सहवप्रवृत्तिः सहैवनिवृत्तिः"** इति न्यायेन गतिकारकोपपदानां त्रयाणामपि, अनुवृत्त्यापत्तौ त्रयाणामपि नियमापत्त्या रामायणपाटस्य भावित्वे दृष्टव्यवहारे **"सम्भूयादिति सम्भूतो रामायण"** इत्यत्र नियमेन अन्तोदात्तत्वव्यावृत्त्याऽपत्तेः ।

**दत्तश्रुतयोः किमिति**—एतदभावे **"तृतीया कर्मणि"** एतस्यापि नियमः स्यादिति देवपालित इत्यत्र तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरो न स्यात् । अस्मान्नियमादत्र संज्ञायामनेन न भवतीति भावः ।

**आशिषि किमिति**—अनाशिषि नियमो माभूत् देवैः खाता देवखाता खनु-

विशेषस्य संज्ञेयम् । आशिष्येवेत्येवमत्रेष्टो नियम इति । आशिष्येवेत्येवमपीत्यर्थः । तेनानाहतो नदति देवदत्त इत्यत्र न भवति । आशिषोऽप्रतीतेः । उभयविधनियमे प्रमाणन्तु "कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधो वक्तव्यः अनाहतो नदति देवदत्तः सिद्धन्तूभयनियमात् उभयतो नियमः करिष्यते" इति भाष्यमेव अनाहतो नदति देवदत्तः इत्यत्र धनञ्जयसम्बन्धिनः शङ्खविशेषस्य देवदत्त इति संज्ञा शंखविशेषस्य यत्र संज्ञा तत्र देवा एनं देयासुरित्यर्थो न प्रतीयते इति तत्तात्पर्यम् । उदाहरणे च देवदत्त इति न शङ्खस्य संज्ञा अपि तु कस्यचित् पुंस इति भवति आशिषः प्रतीतिरिति तत्त्वम् ।

**हस्तरहितवेदाध्ययनस्य किं फलमित्यत आह—**

हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् ।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥

**हस्तसहितवेदाध्ययनस्य किं फलमित्यत आह—**

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ।

**अथ पाणिनीयशिक्षापाठस्य फलमाह—**

त्रिनयनमभिमुखनिःसृतामिमां य इह पठेत् प्रयतश्च सदा द्विजः ।
स भवति धनधान्यपशुपुत्रकीर्तिमानतुलञ्च सुखं समश्नुते दिवीति दिवीति ।

इति श्रीविश्वेश्वरझा शर्म्मविरचिता व्याकरणशास्त्रि-प्रथमखण्डस्य
सपरिशिष्ट-स्वरवैदिकप्रक्रियाप्रश्नोत्तरी समाप्ता ।

---

विश्वेश्वरपुरीमध्ये श्रीविश्वेश्वरशर्मणा ।
परीक्षार्णवपाराय कृता प्रश्नोत्तरी तरिः ॥
इति शुभं भूयात् ।

---

मुद्रक—विद्याविलास प्रेस, बनारस सिटी ।

प्रकाशित हो गया !

प्रकाशित हो गया !!

# वेणीसंहारनाटकम्-

## 'प्रबोधिनी'-'प्रकाश' संस्कृत-हिन्दी टीकाद्वयोपेतम् ।

गवर्नमेन्ट संस्कृ. कालेज बनारस, द्वि॰ शा.की प्रथम खण्ड में तथा कलकत्ता साहित्य उपाधिपरीक्षा द्वितीय पत्र में निर्धारित यह "वेणीसंहार" का नूतन संस्करण परीक्षार्थियों के लिए बहुत ही उपयोगी हुआ है ।

अब तक इस नाटक के ऊपर परीक्षार्थियों के उपयुक्त इस तरह की विस्तृत और सरल कोई व्याख्या नहीं हुई थी । परीक्षा में आये हुए प्रश्नों का समीचीन उत्तर देने में कोमलमति वाले परीक्षार्थियों की अत्यन्त कठिनाइयों को देखकर ही हमारे इस ग्रन्थके टीकाकारों ने सभी नवीन व प्राचीन प्रकाशित टीकाओंका गुण-दोष विवेचन करके नाटकीय व्याख्या के ढङ्ग पर श्लोकान्वय, विग्रह, पर्याय, सुन्दर अर्थ, भावार्थ, अलङ्कार तथा कोषादि प्रमाण से शब्दान्तर देकर समन्वय करते हुए प्रबोधिनी और प्रकाश (संस्कृत-हिन्दी) टीकाओं से, श्लोक, प्राकृत तथा गद्य को इस तरह समझाया है कि, शास्त्री क्या मध्यमा के सुकोमल विद्यार्थी भी स्वयं इससे ज्ञान प्राप्त कर सके हैं । इसमें प्रत्येक पात्र का लक्षण तथा नाटक, चम्पू, काव्य और महाकाव्य आदि का लक्षण भी जगह २ पर दे दिया गया है जो कि आजतक किसी भी अन्य संस्करणों में नहीं पाया जाता । इतनाही नहीं विस्तृत 'भूमिका' में सम्पूर्ण ग्रन्थ की समालोचना कर के सभी अङ्क का संक्षिप्त 'कथासार' भी अलग लिख दिया गया है, जिससे संक्षेप में इस ग्रन्थ का कथानक समझने में बड़ी सुगमता हो गई है । किं बहुना, जिन स्थलों पर अन्य टीकाकारों ने ग्रन्थाशय न समझ कर अन गढन्त पाठ और टीका कर दी है उन स्थलों को भलि भांति सप्रमाण विस्तृत रूपसे 'कविवर-भट्टनारायण' के यथार्थ भाशय का वर्णन कर के समन्वय किया गया है ।

'हाथ कंगन को आरसी क्या' हमारा नम्र निवेदन है कि वेणीसंहार खरीदने के पूर्व इन प्रबोधिनी और प्रकाश टीकाओं को देख कर ही आप पुस्तक खरीदने का कष्ट करें अन्यथा बाद पश्चाताप से क्या लाभ होगा ।

मूल्य भी बहुत अल्प १) मात्र

प्राप्तिस्थानम्—

**चौखम्बा-संस्कृत-पुस्तकालय, बनारस सिटी ।**

